वन्तः; लोकेऽपि 'यद्' वस्तु सहसा प्रज्ञातु मशक्यम्, तदेव 'चक्षुषा' एव प्रज्ञायते। 'तस्मात्'-इत्यादिना तदेवोदाह्रियते। यस्माद् दुर्ज्ञेय मपि चक्षुषा ज्ञातुं शक्यम्, तस्मादेव कारणात् लोके 'मुग्धः' दिङ्मोहं प्राप्तः पुरुषो वनेषु बहुधा 'चरित्वा' 'यदैव' यस्मिन्नेव काले 'अनुष्ठ्या' * केनापि प्रयत्नविशेषेण पर्वतारोहणादिरूपेण सूर्य्योदयादिरूपं दिग्विशेषलिङ्गं 'चक्षुषा प्रजानाति', 'अथ' तदानी मेव ग्रामादिमार्गं 'प्रजानाति'। तस्माच्चक्षुःस्वरूपाभ्या मग्नीषोमाभ्यां दिग्विशेषज्ञानं युक्तम्।

अथादितेः प्रतिष्ठाहेतुत्वं प्रपञ्चयति—"यद्वै तद्देवा यज्ञं प्राजानन्नस्यां वाव तत्प्राजानन्नस्यां समभरन्नस्यै वै यज्ञस्तायतेऽस्यै क्रियतेऽस्यै सम्भ्रियत इयं ह्यदितिस्तदुत्तमा मदितिं यजति, यदुत्तमा मदितिं यजति, यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै"-इति। पूर्वत्र ( ७२ पृ० ) "चक्षुषा वै देवा यज्ञं प्राजानन्"-इति यदुक्तम्, 'तत्' प्रज्ञानं 'यद्वै' यस्मिन्नेव काले सम्पन्नम्, 'तत्' तस्मिन् काले 'अस्यां वाव प्राजानन्' भूमावेव यज्ञपुरुषं प्रज्ञातवन्तः। ततोऽस्यां भूमौ 'समभरन्' यज्ञसाधनानि सम्पादितवन्तः। 'अस्यै वै' अस्या मेव भूमौ 'यज्ञः' 'तायते' विस्तीर्यते। न केवलं यज्ञस्यैव भूमिराधारः, किन्तु लौकिकं कृष्यादिक मस्यां 'क्रियते', तत्साधन मप्यस्यां सम्पाद्यते। न च भूमेः प्राशस्त्ये सति अदितेः कि मायात मिति वाच्यम्; 'हि'

* शतपथव्याख्यायाम् 'अनुष्ठ्या'-अनुक्रमेण'-इत्याह हरिस्वामी ( १.४.२.१७; ५.१.६. ); सायणेन तूक्तं तत्रापि 'अनुष्ठ्या = अनुष्ठानेन'-इति ( २.१.२.१२. )। वस्तुतो वेदेषु अनुष्ठी-अनुष्ठु-अनुष्ठा-अनुष्ठान-शब्दाः समानार्था इतीव गम्यते। तत्रानुष्ठीशब्दस्य स्त्रीलिङ्गैकवचने रूप मनुष्ठ्येति, अनुष्ठु-शब्दस्यानुष्टुयेति ( ऋ० सं० ४.४.१४. ) च।

यस्माद् 'इयम्' भूमिः 'अदितिः', 'तत्' तस्मात् 'अदितिम्' 'उत्तमां' चरमदेवतां 'यजति'। तादृशं यजनं यदस्ति, तत्, क्रियमाणस्य 'यज्ञस्य' अदितिद्वारा देवेषु प्रज्ञानाय सम्पद्यते। तच्च देवप्रज्ञानं यजमानस्य स्वर्गलोकावगमाय भवति ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां द्वितीयाध्याये
द्वितीयः खण्डः ॥ २ ( ८ ) ॥

---

॥ अथ तृतीयः खण्डः ॥

देवविशः कल्पयितव्या इत्याहुस्ताः कल्पमाना अनु मनुष्यविशः कल्पन्त इति सर्वा विशः कल्पन्ते कल्पते यज्ञोऽपि तस्यै जनतायै कल्पते यत्रैवं विद्वान् होता भवति स्वस्ति नः पथ्यासु धन्वस्वित्यन्वाह स्वस्त्यप्सु वृजने स्वर्वति स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातनेति मरुतो वै देवानां विशस्ता एवैतद्यज्ञमुखेऽचीकॢपत् सर्वैश्छन्दोभिर्यजेदित्याहुः सर्वैर्वै छन्दोभिरिष्ट्वा देवाः स्वर्गं लोकमजयंस्तथैवैतद्यजमानः सर्वैश्छन्दोभिरिष्ट्वा स्वर्गं लोकं जयति स्वस्ति नः पथ्यासु धन्वस्विति स्वस्तिरिद्धि प्रपथे

श्रेष्ठेति पथ्यायाः स्वस्तेस्त्रिष्टुभावग्ने नय सुपथा राये अस्मानादेवाना मपि पन्था मगन्मेत्यग्नेस्त्रिष्टुभौ त्वं सोम प्रचिकितो मनीषा या ते धामानि दिवि या पृथिव्या मिति सोमस्य त्रिष्टुभावा विश्वदेवं सत्पतिं य इमा विश्वा जातानीति सवितुर्गायत्र्यौ सुत्रामाणं पृथिवीं द्या मनेहसं मही मू षु मातरं सुव्रताना मित्यदितेर्जगत्यावेतानि वाव सर्वाणि छन्दांसि गायत्रं त्रैष्टुभं जागत मन्वन्यान्येतानि हि यज्ञे प्रतमा मिव क्रियन्त एतैर्ह वा अस्य छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद ॥ ३ ( ९ ) ॥

प्रायणीयेष्टौ काम्यान् प्रयाजप्रकारान्विधाय देवताश्च प्रशंस्य तासां देवतानां सम्बन्धिन्यौ याज्यानुवाक्ये क्रमेणाभिसन्धातुं प्रस्तौति—“देवविशः कल्पयितव्या इत्याहुस्ताः कल्पमाना अनु मनुष्यविशः कल्पन्त इति सर्वा विशः कल्पन्ते, कल्पते यज्ञोऽपि”-इति । विश इत्ययं शब्दः प्रजामात्रवाची, वैश्यजातिविशेष-वाची वा ; सन्ति हि देवेष्वपि जातिविशेषाः । अग्निर्बृहस्पतिश्च देवेषु ब्राह्मणौ ; “अग्ने महाꣳ असि ब्राह्मण भारत ( तै० ब्रा० ३.५.३. * )”, “ब्रह्म वै देवानां बृहस्पतिः”-इति ( तै० सं० २.

* एतन्मन्त्रस्य सांहितिके ब्राह्मणे, वाजसनेयिब्राह्मणे च व्याख्यानं द्रष्टव्यम् ( तै० सं० २. ५. ९. १, तथा शत० ब्रा० १. ४. २. २ ) ।

२. ८. १.)"-इति श्रुतेः *। क्षत्रियादिजातयस्तु सृष्टिप्रकरणे वाजसनेयिभिः स्पष्ट मेवाम्नाताः—"तच्छ्रेयो रूप मत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति ०—० स विश मसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे देवा मरुत इति ०—० स शौद्रं वर्ण मसृजत पूषणम्"-इति (शत० ब्रा० १४. ४. २. २३—२५. †)। एवम् "आदित्यो वै दैव्यं क्षत्रम्"-इत्यादिक मुदाहार्यम् ‡। एवं सति देवेषु विशो वैश्यजातिरूपाः प्रजा मरुदादयो याः सन्ति, ता अस्मिन् यागे 'कल्पयितव्याः' सम्पादयितव्याः, 'इति' एवम् ब्रह्मवादिनः 'आहुः'। 'कल्पमानाः' सम्पन्नाः 'ता दैवविशः' 'अनु'सृत्य 'मनुष्यविशः' अपि तदनुग्रहात्सम्पद्यन्ते 'इति' एवं दैव्यो मानुषश्च 'सर्वा विशः' यजमानस्य सम्पद्यन्ते। तासु सम्पन्नासु द्रव्यलाभात् 'यज्ञोऽपि'

---

* "ब्रह्म हि ब्राह्मणः" शत० ब्रा० ५. १. १. ११ ; १३. १. ५. २।

† तदाद्यन्तपाठस्त्वेवम्—"ब्रह्म वा इद मग्र आसीत् एक मेव तदेकꣳ सन्न व्यभवत् तच्छ्रेयोरूप०—० रीशान इति तस्मात् क्षत्रात् परं नास्ति। तस्माद् ब्राह्मणः क्षत्रिय मधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति। सैषा क्षत्रस्य योनिर्यद् ब्रह्म। तस्माद् यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम्। य उ एनꣳ हिनस्ति स्वाꣳ स योनि मृच्छति। स पापीयान् भवति। यथा श्रेयाꣳसꣳ हिंसित्वा। स नैव व्यभवत्। स विश०—० मरुत इति। स नैव व्यभवत्। स शौद्रं०—० पूषणम्। इयं वै पूषा। इयꣳ हीदꣳ सर्वं पुष्यति यदिदं किञ्च। स नैव व्यभवत्। तच्छ्रेयोरूप मत्यसृजत धर्म्मम्। तदेतत् क्षत्रस्य क्षत्रं यद्धर्म्मः। तस्माद्धर्म्मात् परं नास्ति। अथो अबलीयान् बलीयाꣳसꣳ माशꣳसते धर्मेण। यथा राज्ञा। एवं यो वै स धर्म्मः सत्यं वै तत्। तस्मात् सत्यं वदन्त माहुर्धर्म्मं वदतीति, धर्म्मं वा वदन्तꣳ सत्यं वदतीति। एतद्ध्येवैतदुभयं भवति। तदेतद् ब्रह्म क्षत्रं विट् शूद्रः"-इति शत० ब्रा० १४.४.२.२३—२७=बृ० उप० १.४.११—१५।

‡ उपरिष्टादिहैव ७, ४, २।

'कल्पते' स्वप्रयोजनसमर्थो भवति । एतद्वेदनं प्रशंसति—"तस्मै जनतायै कल्पते यत्रैवं विद्वान् होता भवति"-इति । पूर्ववद् ( ६७ पृ० ) व्याख्येयम् ॥

प्रथमं देवतायाः पुरोऽनुवाक्यां विधत्ते—"स्वस्ति नः पथ्यासु धन्वस्वित्यन्वाह"-इति । स एष प्रथमः पादः तस्याया ऋचः प्रतीकग्रहणार्थः * । अस्या ऋचि देवविशां वाचकं मरुच्छब्दं दर्शयितु मवशिष्टं पादत्रयं पठति—"स्वस्त्यप्सु वृजने स्वर्वति, स्वस्ति नः पुत्रकृथेषु योनिषु, स्वस्ति राये मरुतो दधातनेति" -इति । 'इति' शब्दो मन्त्रसमाप्त्यर्थः । मन्त्रस्याय मर्थः—हे 'मरुतः' ! 'नः' अस्माकं 'धन्वसु पथ्यासु' मरुदेशरूपेषु मार्गेषु 'स्वस्ति दधातन' जलप्रदानेन क्षेमं कुरुत । किञ्च सतीष्वपि 'अप्सु' 'वृजने' वर्जिते जनशून्ये 'स्वर्वति' स्वर्गयुक्ते मार्गे 'स्वस्ति' दधातन । तथा 'पुत्रकृथेषु' पुत्रोत्पत्तिकारणेषु 'योनिषु' कलत्रेषु 'नः' अस्माकं 'स्वस्ति' दधातन । तथा 'राये' धनाय 'स्वस्ति' अस्तु ( सं० १०.६३. १५. ) । अस्या ऋचि मरुच्छब्दः, कथ मेतावतैव विशां कल्पन मित्याह—"मरुतो वै देवानां विशस्ता एवैतद्यज्ञ-मुखे ऽचीक्लृपत् सर्वैश्छन्दोभिर्यजेदित्याहुः ; सर्वैर्वै छन्दोभिरिष्ट्वा देवाः स्वर्गं लोक मजयंस्तथैवैतद्यजमानः("—इति । 'एतत्' एतेन मरुच्छब्दोपेत-मन्त्रपाठेन 'यज्ञमुखे' यज्ञप्रारम्भरूपे कर्मणि 'ता देवानां विशः' 'अचीक्लृपत्' कल्पितवान् भवति । छन्दोवाहुल्य मभिधाय प्रशंसति—")सर्वैश्छन्दोभिरिष्ट्वा स्वर्गं लोकं जयति"-इति । स्पष्टोऽर्थः † ॥

---

* तथाच सूत्रम्—'ऋचं पादग्रहणे'-इति आश्व० श्रौ० १. १. १७ ।

† बन्धनीचिह्नान्तर्गतो ग्रन्थः क-ग-पुस्तकयोर्नास्ति ।

मन्त्रविशेषान्, तत्र छन्दांसि च, पथ्यादीनां देवानां क्रमेणोदाहरति—"स्वस्ति नः पथ्यासु धन्वसु, स्वस्तिरिद्धि प्रपथे श्रेष्ठेति पथ्यायाः स्वस्तेस्त्रिष्टुभावग्ने नय सुपथा राये अस्माना देवाना मपि पन्था मगन्मेत्यग्नेस्त्रिष्टुभौ; त्वं सोम प्रचिकितो मनीषा, या ते धामानि दिवि या पृथिव्या मिति सोमस्य त्रिष्टुभावा विश्वदेवं सत्पतिं, य इमा विश्वा जातानीति सवितुर्गायत्र्यौ; सुत्रामाणं पृथिवीं द्या मनेहसं, मही भू षु मातरं सुव्रताना मित्यदितेर्जगत्यौ"–इति। 'स्वस्ति नः'–इत्यनुवाक्या (सं० १०. ६३. १५.); 'स्वस्तिरिद्धि'–इति याज्या (सं० १०. ६३. १६.)। 'अग्ने नय'–इत्यनुवाक्या (सं० १. १८९. १.); 'आ देवानाम्'–इति याज्या (सं० १०. २. ३.) 'त्वं सोम'–इत्यनुवाक्या (सं० १. ९१. १.); 'या ते धामानि'–इति याज्या (सं० १. ९१. ४.)। 'आ विश्वदेवम्'–इत्यनुवाक्या (सं० ५. ८२. ७.); 'य इमा'–इति याज्या (सं० ५. ८२. ९.)। 'सुत्रामाणम्'–इत्यनुवाक्या (सं० १०. ६३. १०.); 'मही मू षु'–इति याज्या (वा० सं० २१. ५.) *। नन्वत्र त्रीण्येव छन्दांस्युक्तानि, न तु सर्वाणीत्याशङ्क्याह—"एतानि वाव सर्वाणि छन्दांसि गायत्रं त्रैष्टुभं जागत मन्वन्यान्येतानि हि यज्ञे प्रतमा मिव क्रियन्ते"–इति। मुख्यानि 'सर्वाणि छन्दासि' त्रीण्येव, इतराणि तु मुख्यान्यनुसृत्य वर्त्तन्ते। मुख्यत्व मेव 'एतानि ह' इत्यादिना स्पष्टीक्रियते। 'हि' यस्मात्कारणात् 'एतानि' त्रीणि 'यज्ञे' 'प्रतमाम् इव क्रियन्ते' अत्यन्तप्राचुर्येणैव प्रयुज्यन्ते; ततो मुख्य-

---

* आश्व० श्रौ० ४. ३. २। कात्या० श्रौ० १९. ७. १६।

त्वम् । एतद्वेदनं प्रशंसति—"एतैर्ह वा अस्य छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद"—इति। स्पष्टोऽर्थः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां द्वितीयाध्याये
तृतीयः खण्डः ॥ ३ (९) ॥

---

॥ अथ चतुर्थः खण्डः ॥

ता वा एताः प्रवत्यो नेतृमत्यः पथिमत्यः स्वस्तिमत्य एतस्य हविषो याज्यानुवाक्या एताभिर्वा इष्ट्वा देवाः स्वर्गं लोकमजयंस्तथैवैतद्यजमान एताभिरिष्ट्वा स्वर्गं लोकं जयति तासु पदमस्ति स्वस्ति राये मरुतो दधातनेति मरुतो ह वै देवविशोऽन्तरिक्षभाजनास्तेभ्यो ह योऽनिवेद्य स्वर्गं लोकमेतीश्वरा हैनं नि वा रोद्धोर्वि वा मथितोः स यदाह स्वस्ति राये मरुतो दधातनेति तं मरुद्भ्यो देवविड्भ्यो यजमानं निवेदयति न ह वा एनं मरुतो देवविशः स्वर्गं लोकं यन्तं निरुन्धते न विमथ्नते स्वस्ति हैनमत्यर्जन्ति स्वर्गं लोकमभि

य एवं वेद विराजावेतस्य हविषः स्विष्टकृतः संयाज्ये स्यातां ये त्रयस्त्रिंशदक्षरे सेदग्निरग्नीँ* रत्यस्त्वन्यान्- सेदग्निर्यो वनुष्यतो निपातीत्येते विराड्भ्यां वा इष्ट्वा देवाः स्वर्गं लोक मजयंस्तथैवैतद्यजमानो विराड्भ्या मिष्ट्वा स्वर्गं लोकं जयति ते त्रयस्त्रिंशदक्षरे भवतस्त्र- यस्त्रिंशद्वै देवा अष्टौ वसव एकादश रुद्रा द्वादशा- दित्याः प्रजापतिश्च वषट्कारश्च तत्प्रथमे यज्ञमुखे देवता अक्षरभाजः करोत्यक्षरेणाक्षरेणैव तद्देवतां प्रीणाति देवपात्रेणैव तद्देवतास्तर्पयति ॥ ४ (१०)॥

पञ्चानां देवानां क्रमेण याज्यानुवाक्ये उदाहृते; अथ संयाज्ये वक्तव्ये। तत्रादौ तावदुदाहृता याज्यानुवाक्याः प्रशंसति— "ता वा एताः प्रवत्यो नेदमत्यः पथिमत्यः स्वस्तिमत्य एतस्य हविषो याज्यानुवाक्या, एताभिर्वा इष्ट्वा देवाः स्वर्गं लोक मजयं- स्तथैवैतद्यजमान एताभिरिष्ट्वा स्वर्गं लोकं जयति"—इति। 'स्वस्ति नः पथ्यासु धन्वसु'-इत्याद्याः, 'मही मू षु मातरम्'-इत्यन्ताः, दशर्चो याः पूर्व मुदाहृताः ( ७८ पृ० ), 'ताः' एव 'एताः' प्रशब्द- नेदशब्द-पथिशब्द-सस्तिशब्दवत्यः। तत्र। 'प्र'शब्दः—'स्वस्ति- रिद्धि प्रपथे', 'तं सोम 'प्रचिकितो'—इत्यत्र श्रूयते। 'नेद'शब्दः— 'अग्ने नय'-इत्यत्र श्रूयते; नयति धातोः कर्त्तुंस्तत्त्रावगमात्।

* 'रग्नीं' क, ङ; 'रग्नीँ' घ। वस्तुत संहितायां 'दीर्घादटि ( पा० ८. ३. ९. )'- इति नस्य रुत्वे 'आतोऽटि नित्यम् ( पा० ८. ३. ३. )'-इतीकारः सानुनासिक इतीव।

'पथि'शब्दः—'अग्ने नय सुपथा', 'आ देवाना मपि पन्थाम्'-इत्यत्र श्रूयते। 'स्वस्ति'शब्दः— 'स्वस्ति नः पथ्यासु', 'स्वस्तिरिद्धि'-इत्यत्र श्रूयते। तथा सति छत्रिन्यायेन सर्वा अप्येता ऋचः प्रादिभिः शब्दैर्युक्ता इति वक्तुं शक्याः। एवं सत्युत्कर्षद्योतकैः एतैः शब्दै-र्युक्ताः, एता ऋचः प्रायणीयेष्टिगतस्य 'हविषो याज्यानुवाक्याः' प्रशस्ता भवन्ति। 'एताभिरिष्ट्वा'-इत्यादेरर्थो विस्पष्टः॥

प्रथमायां ऋचि चतुर्थं पाद मादाय तत्रत्यस्य मरुच्छब्दस्य अन्वयव्यतिरेकाभ्यां तात्पर्यं दर्शयति—"तासु पद मस्ति, स्वस्ति राये मरुतो दधातनेति मरुतो ह वै देवविशोऽन्तरिक्षभाजना-स्तेभ्यो ह योनिवेद्यः स्वर्गं लोक मेतीश्वरा हैनं नि वा रोद्धोर्वि वा मथितोः; स यदाह स्वस्ति राये मरुतो दधातनेति तं मरुद्भ्यो देवविड्भ्यो यजमानं निवेदयति; न ह वा एनं मरुतो देवविशः स्वर्गं लोकं यन्तं निरुन्धते न विमथ्नते"—इति। 'तासु' पूर्वोक्तासु ऋक्षु 'पदं' पादः, तस्मिन् पादे प्रोक्ताः 'मरुतः' देवानां वैश्याः, अन्तरिक्षे निवसन्ति *, 'एनं' यजमानम् 'नि वा रोद्धोः' † स्वर्गगमनं निरोद्धुं वा, 'वि वा मथितोः' ‡ विशेषेण मथितु मालोड़यितुं विनाशयितुं वा, ते 'मरुतः' ईश्वराः §, समर्थाः। सोऽयं व्यतिरेकः; बाधस्यात्रोपन्यस्तत्वात्। 'सः यदाह'-इत्यादि-रन्वयः, उक्तबाधसमाधानस्य; तत्रोपन्यासात्। यदि होता 'स्वस्ति राये'-इत्यादि पादं पठेत्, तदानीं 'मरुद्भ्यो यजमानं निवेदयति'। ततो 'मरुतः स्वर्गं लोकं' गच्छन्तं यजमानं 'न' एव

* 'अथातो मध्यस्थाना देवगणाः। तेषां मरुतः प्रथमागामिनो भवन्ति'-इत्यादि निरु० ११. २. १, २। ते च रुद्रपुत्राः ऋ० सं० १. ८. ६. १; ४. ३. २१. १. सा० भा०।

†, ‡, § 'ईश्वरे तोसुन्-कसुनौ' पा० ३. ४. १३।

'निरुन्धते', नापि 'विमथ्नते' विनाशयन्ति। वेदनं प्रशंसति—"स्वस्ति हैन मत्यर्जन्ति स्वर्गं लोक मभि य एवं वेद"—इति। 'स्वर्गम्' 'अभि'लक्ष्य जिगमिषुम् 'एनं' वेदितारं 'स्वस्ति' क्षेमो यथा भवति तथा मरुतो अतिशयेन प्रापयन्ति॥

इत्थ मुक्ताः प्रधानहविषो याज्यानुवाक्याः प्रशस्य संयाज्ये विधत्ते—"विराजावेतस्य हविषः स्विष्टकृतः संयाज्ये स्यातां ये त्रयस्त्रिंशदक्षरे"—इति। विराट्छन्दस्कानां बहूनां विद्यमानत्वात् त्रयस्त्रिंशदक्षरशब्देन ते ऋचौ विशेष्येते। तयोर्ऋचोः प्रथमपादावुदाहरति— "सेदग्निरग्नीँरत्यस्त्वन्यान्, सेदग्निर्यो वनुष्यतो निपातीत्येते"—इति *। विराजौ प्रशंसति—"विराड्भ्यां वा इष्ट्वा देवाः स्वर्गं लोक मजयंस्तथैवैतद्यजमानो विराड्भ्या मिष्ट्वा स्वर्गं लोकं जयति"—इति। 'तथैवैतत्'-इति दार्ष्टान्तिक-प्रतिज्ञा; 'यजमानः'-इत्यादिकं तद्विवरणम्। ऋचोः अवस्थिता मक्षरसङ्ख्यां प्रशंसति—"ते त्रयस्त्रिंशदक्षरे भवतस्त्रयस्त्रिंशद्वै देवा अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च; तत्प्रथमे यज्ञमुखे देवता अक्षरभाजः करोत्यक्षरेणाक्षरेणैव तद् देवतां प्रीणाति देवपात्रेणैव तद् देवतास्तर्पयति"—इति। वषट्कारो देवताविशेषः। 'तत्' तथा सति, देवताना मक्षराणां च सङ्ख्यासाम्ये सति, यज्ञमुखं यज्ञोपक्रमः; स च सुत्यादिनं प्रातरनुवाकादिना भविष्यति, तदपेक्षया प्रायणीयेष्टिः प्रथमं यज्ञमुखम्; तस्मिन् 'यज्ञमुखे' वस्वादिकाः सर्वाः 'देवताः' सङ्ख्या-साम्याद् 'अक्षरभाजः करोति'। 'तत्' तेन देवताना मक्षर-

---

* ऋ० सं० ७. १. १४, १५। आश्वा० श्रौ० ४. ३, २।

प्रायशेनैकैका देवता मेकैकेनाक्षरेण तोषयति । देवानां पात्रं फल मेकैक मक्षरम् ; तेनैव पात्रेण 'तत्' तदानीं 'देवताः' 'तर्पयति' प्रीणातीत्यस्यैव विवरण मेतत् ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां द्वितीयाध्याये
चतुर्थः खण्डः ॥ ४ ( १० ) ॥

---

॥ अथ पञ्चमः खण्डः ॥

प्रयाजवदननुयाजं कर्तव्यम्प्रायणीय मित्याहुर्हीन मिव वा एतदीङ्खित मिव यत्प्रायणीयस्यानुयाजा इति तत्तन्नादृत्यम् प्रयाजवदेवानुयाजवत्कर्तव्यम् प्राणा वै प्रयाजाः प्रजानुयाजा यत्प्रयाजानन्तरियात्प्राणांस्तद्यजमानस्यान्तरियाद्य दनुयाजानन्तरियात्प्रजान्तद्यजमानस्यान्तरियात् तस्मात्प्रयाजवदेवानुयाजवत्कर्त्तव्यम्पत्नीर्न संयाजयेत् संस्थितयजुर्न जुहुयात्तावतैव यज्ञो ऽसंस्थितः प्रायणीयस्य निष्कासं निदध्यात्त मुदयनीयेनाभिनिर्वपेद्यज्ञस्य सन्तत्यै यज्ञस्याव्यवच्छेदायाथो खलु यस्या मेव स्थाल्यां प्रायणीयं निर्व-

पेत्तंस्था मुदयनीयं निर्वपेत्तावतैव यज्ञः सन्ततोऽव्यवच्छिन्नो भवत्यमुष्मिन्वा एतेन लोके राध्नुवन्ति नास्मिन्नित्याहुर्यत्प्रायणीयमिति प्रायणीयमिति निर्वपन्ति प्रायणीयमिति चरन्ति प्रयन्त्येवास्माल्लोकाद्यजमाना इत्यविद्ययैव तदाहुर्व्यतिषजेद्याज्यानुवाक्या याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः कुर्याद्या उदयनीयस्य पुरोनुवाक्यास्ताः प्रायणीयस्य याज्याः कुर्यात् तद् व्यतिषजत्युभयोर्लोकयोरृद्ध्या उभयोर्लोकयोः प्रतिष्ठित्या उभयोर्लोकयोरृध्नोत्युभयोर्लोकयोः प्रतितिष्ठति प्रतितिष्ठति य एवं वेदादित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीयो यज्ञस्य धृत्यै यज्ञस्य बर्सनह्यै यज्ञस्याप्रस्रंसाय तद्यथैवाद इति ह स्माह तेजन्या उभयतोऽन्तयोरप्रस्रंसाय बर्सौ नह्यत्येवमेवैतद्यज्ञस्योभयतोऽन्तयोरप्रस्रंसाय बर्सौ नह्यति यदादित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीयः पथ्ययैवेतः स्वस्त्या* प्रयन्ति पथ्यां स्वस्तिमभ्युद्यन्ति स्वस्त्येवेतः प्रयन्ति स्वस्त्युद्यन्ति स्वस्त्युद्यन्ति ॥ ५ (११) ॥

इत्यैतरेयब्राह्मणे प्रथमपञ्चिकायां द्वितीयोऽध्यायः ॥२॥

---

* 'पथ्ययैवेत स्वस्त्या'—इति निर्विसर्गपाठः ख-ग-पुस्तकयोः ।

संयाज्ये विधाय प्रयाजानुयाजविषये किञ्चिद् विशेषविधानं पूर्वपक्षत्वेन शाखान्तरीयमत मुपन्यस्यते— “प्रयाजवदननुयाजं कर्त्तव्यम् प्रायणीय मित्याहुर्हीन मिव वा एतदीङ्खित मिव यत्प्रायणीयस्यानुयाजा इति”-इति। प्रायणीयेष्टेर्दर्शपूर्णमासविकृतित्वाच्चोदकेन प्रयाजा अनुयाजाश्च प्राप्ताः। “समिधो अग्न आज्यस्य” -इत्याद्या मन्त्रसाध्याः पञ्च प्रयाजाः (तै० ब्रा० ३.५.५.१—५.)। “देवं बर्हिः”-इत्याद्या मन्त्रसाध्यास्त्रयोऽनुयाजाः (तै० ब्रा० ३. ५. ९. १—३.)। प्रायणीयाख्यं कर्म्म प्रयाजोपेत मनुयाजवर्जितं * कर्त्तव्य मिति शाखान्तरीया आहुः †। तत्रैषा युक्तिः ‡। ‘प्रायणीयस्यानुयाजाः’-इति यदस्ति, तत् ‘एतत्’ ‘हीन मिव वै’; तस्यैव व्याख्यानम् ‘ईङ्खित मिव’-इति, विलम्बित मित्यर्थः। अनुयाजेष्विज्यमानेषु कर्म्मणि विलम्बो भवेत्; तस्मात् न यष्टव्या अनुयाजाः। ‘इति’-शब्दः पूर्वपक्षसमाप्त्यर्थः। यथा प्रायणीये कर्म्मणि अनुयाजा वर्ज्यन्ते, तथैवोदयनीये कर्म्मणि प्रयाजा वर्जनीया इति पूर्वपक्षाभिप्रायः। त मेतं तैत्तिरीया विस्पष्ट मामनन्ति— “प्रयाजवदननुयाजं प्रायणीयं कार्यं मनुयाजवदप्रयाज मुदयनीयम्”-इति ( तै० सं० ६. १. ५. ३. )। स्वोक्तं पूर्वपक्षं निराचष्टे—“तत्तन्नादृत्यम्”-इति। ( तस्मिन् प्रायणीये कर्म्मणि

---

* अनूयाज मिति दीर्घमध्यपाठस्तैत्तिरीयाणाम्, बह्वृचां तु अनुयाज मिति ह्रस्वमध्य एव ; वक्ष्यति चैतदनुपदं स्वयं भाष्यकारोऽपि (८६ पृ० )। परं महष्टेषु सर्वेष्वैतरेयभाष्येषु दीर्घमध्यः, तदत्र लिपिकरप्रमादप्रवाह एव हेतुर्मन्यते।

† तथाहि— शत० ब्रा० “तदिडान्तं भवति, नानुयाजान् यजन्ति”-इत्यादि “तस्मादिडान्तं भवति, नानुयाजान् यजन्ति”-इत्यन्तम् ( ३. ४. १. २६. )। तथा कात्या० ‘उत्तरं वा प्रकृत्यनुयाजानुयाजप्रतिषेधाभ्याम् ( ७. ५. २४. )’-इति।

‡ ‘उक्तिः’ ख, ग।

'तत्' कर्म्म, अनुयाजवर्जनरूपम् 'न' आदरणीयम् । *) वर्जने बाध मुपन्यस्यति—"प्रयाजवदेवानुयाजवत्कर्त्तव्यम्; प्राणा वै प्रयाजाः प्रजानुयाजा यत्प्रयाजानन्तरियात्प्राणांस्तद्यजमानस्यान्तरियाद्यदनुयाजानन्तरियात्प्रजान्तद्यजमानस्यान्तरियात्"--इति। प्रथमशब्दसामान्यात्प्रथमभावित्वाद्दा 'प्रयाजाः' यजमानस्य प्राणरूपाः; पश्चाद्भावित्वाद् 'अनुयाजाः' पुत्रादिरूपाः; यदा प्रयाजा वर्ज्यन्ते, तदा यजमानसम्बन्धिनां प्राणाना मन्तरायो विच्छेदः स्यात्; अनुयाजवर्जने पुत्रादिविच्छेदः। अय मेव पूर्वपक्षबाधस्तैत्तिरीयैराम्नातः—"तत्तथा न कार्यं मात्मा वै प्रयाजाः प्रजानूयाजा यत्प्रयाजानन्तरियादात्मान मन्तरियाद्यदनुयाजानन्तरियात्प्रजा मन्तरियात्"-इति (तै० सं० ६. १. ५. ४.)। यद्यपि प्रायणीये प्रयाजवर्जन मप्रसक्तम्, तथापि उदयनीये तैत्तिरीयोपन्यस्तं प्रयाजवर्जन मभिप्रेत्यायं बाधोपन्यासः। इत्थं पूर्वपक्षे बाध मुपन्यस्य चोदकैः प्राप्तस्योभयानुष्ठानस्य प्रतिप्रसवरूपं सिद्धान्तं विधत्ते —"तस्मात् प्रयाजवदेवानुयाजवत्कर्त्तव्यम्"-इति। यस्मादन्यतरत्यागे बाधस्तस्मादित्यर्थः। तैत्तिरीया अप्येतदामनन्ति— "प्रयाजवदेवानूयाजवत् प्रायणीयं कार्यम्; प्रयाजवदनूयाजवदुदयनीयम्"-इति (तै० सं० ६. १. ५. ५.)। अत्र सर्वत्रैतरेयपाठेऽनुयाज इति ह्रस्व उकारः; तैत्तिरीयपाठे दीर्घ इति विवेकः॥

चोदकप्राप्तान् पत्नीसंयाजान् समिष्टयजुश्च निषेधति—"पत्नीर्न संयाजयेत्, संस्थितयजुर्न जुहुयात्"-इति †। ततः किं मित्य-

---

* बन्धनीचिह्नान्तर्गत एष ग्रन्थो नास्ति क-पुस्तके।

† पत्न्यनुष्ठेयाश्चत्वारो यागाः पत्नीसंयाजा उच्यन्ते। ते च दधिभक्षणानन्तरं वेद्या-

पेक्षाया माह—"तावतैव यज्ञो ऽसंस्थितः"-इति । तदानीं यज्ञस्य समाप्तत्वादुत्तरकालीनं सोमक्रयादिकं न प्रवर्त्तेत; एतेषा मननुष्ठानमात्रेण यज्ञोऽसमाप्तो भवति, ततः उत्तरानुष्ठानं निर्बाधं प्रवर्त्तते ॥

किञ्चिद्विशेषं विधत्ते—"प्रायणीयस्य निष्कासं निदध्यात्त मुदयनीयेनाभिनिर्वपेद्यज्ञस्य सन्तत्यै, यज्ञस्याव्यवच्छेदाय"-इति । भाण्डगतो लेपरूपो हविःशेषो निष्कासः । प्रायणीयकर्म- सम्बन्धिनं निष्कासं कस्मिंश्चित् पात्रे स्थापयेत् । ततः सुत्या-

---

लम्बादिकं कृत्वा शालाद्वार्ये भवन्ति ( कात्या० १०.८.१०. )। "ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्ति०—० अथ पत्नीः संयाजयन्ति०—० तस्मात् पत्नीः संयाजयन्ति । यतस्यै देवता यजति०—० अथ सोमं यजति०—० अथ त्वष्टारं यजति०—० अथ देवानां पत्नीर्यजति० —० अथाग्निं गृहपतिं यजति०—० एव मेवैतत् पत्नीᳬ समा करोति"—इति शत० ब्रा० १. ९. २. १—१५ । तैत्तिरीयकेऽपि—'सोमं यजति'-इत्यादि 'आग्नेय पत्नीसंयाजाः'- इत्यन्तं द्रष्टव्यम् ( तै० सं० २. ६. १०. )। तन्मन्त्रादिविधयस्तु तद्ब्राह्मणे ३. ५. १२. १३ । मीमांसायास्तृतीयाध्यायीयद्वतीयपादे चैतन्मूलक मधिकरण मेक मारचितम् ( जै० सू० ३. ३. २०—२२. अधि० १०. )।

"अथ समिष्टयजूंषि जुहोति०—० या वा एतेन यज्ञेन देवता ह्वयति, याभ्य एष यज्ञस्तायते, सर्वा वै तत्ताः समिष्टा भवन्ति, यत्तत् तासु सर्वासु समिष्टास्वथैतज्जुहोति, तस्मात् समिष्ट- यजुर्नाम०—० तस्मात् समिष्टयजुर्जुहोति"-इति शत० ब्रा० १. ९. २. २५—२७ । तथा तैत्तिरीयकेऽपि "समिष्टयजूᳬषि जुहोति यज्ञस्य समिष्ट्यै । यद्वै यज्ञस्य क्रूरं, यद् विलिष्टं, यदत्येति, यन्नात्येति, यदतिकरोति, यन्नापि करोति, तदेव तैः प्रीणाति"-इति तै० सं० ६. ६. २. १ । एतद्विधानं च तत्पुरस्तादेव श्रुतं द्रष्टव्यम् ( २. ६. १०. )। तत्रैवेद मप्युक्तं सायणेन—'देवा गातुविदः'-इत्ययं मन्त्रः (वा० सं० ८. २१.) इष्टिसम्पूर्तिकारित्वात् समिष्ट- यजुरित्युच्यते । स च मन्त्र आध्वर्यवकाण्डे समाम्नातो व्याख्यातश्च'-इति । तत्र चाध्वर्यवे ( तै० सं० १. १. ४४. ) समिष्टयजुर्होमो निरूपितः । "नव समिष्टयजूᳬषि जुहोति"- इत्यादि शत० ब्रा० ४. ४. ४. १. द्रष्टव्यम् । "समिन्द्रेण इति ( वा० सं० ८. १५. ) नव समिष्टयजूᳬषि जुहोति प्रतिमन्त्रम्"-इति च कात्या० श्रौ० १०. ८. ११ ।

दिने * सोमयागस्यावसाने उदयनीयेष्टिगतेन हविषा सह तं 'निष्कासं' 'समभिनिर्वपेत्'। एवं सति प्रायणीयशेषस्यानुवर्त्तनात् सोमयागः सन्ततो भवति; न तु तस्य विच्छेदः प्राप्नोति। तैत्तिरीयास्त्वामनन्ति—"प्रायणीयस्य निष्कास उदयनीय मभिनिर्वपति, सैव सा यज्ञस्य सन्ततिः"-इति (तै० सं० ६. १. ५. ५.)। प्रकारान्तर माह—"अथो खलु यस्या मेव स्थाल्यां प्रायणीयं निर्वपेत्तस्या मुदयनीयं निर्वपेत्तावतैव यज्ञः सन्ततो ऽव्यवच्छिन्नो भवति"-इति। नात्र निष्कासोऽपेक्षितः किन्तु स्थाल्येकत्वमात्रेण यज्ञस्य सन्ततत्वादव्यवच्छेदराहित्यं सिध्यति। सान्तत्य-व्यवच्छेद-राहित्ययोऽर्थत एकत्वेऽप्यन्वयव्यतिरेकरूपत्वेन पृथगुपन्यासः॥

अथ प्रायणीयोदयनीयेष्ट्योर्याज्यानुवाक्याव्यत्यासं विधातुं प्रस्तौति—"अमुष्मिन्वा एतेन लोके राध्नुवन्ति नास्मिन्नित्याहुर्यत् प्रायणीय मिति; प्रायणीय मिति निर्वपन्ति, प्रायणीय मिति चरन्ति; प्रयन्त्येवास्माल्लोकाद्यजमाना इति"-इति। ब्रह्मवादिनः किञ्चिद् † दोषम् 'आहुः'—'प्रायणीयम्' 'इति' एवंविधनामोपेतं 'यत्' कार्य मस्ति, 'एतेन' कर्म्मणा, यजमानाः स्वर्गलोके एव समृद्धिं प्राप्नुवन्ति; 'नास्मिन्' लोके। कथ मिति चेत्, 'प्रायणीयम्' 'इति' एतत् नाम, मनसा कृत्वा 'निर्वपन्ति', चरणकालेऽपि तथैव 'चरन्ति'। चरण माहुतिप्रक्षेपः। तस्य च नाम्नो ऽय मर्थः— अनेन कर्म्मणा 'यजमानाः अस्माल्लोकात् प्रयन्त्येव'; न त्वस्मिंल्लोके कञ्चित्कालं प्रतितिष्ठन्ति। तस्मात् प्रायणीय-

---

* सुत्यालक्षण मिहैव चतुर्थाध्यायान्ते वक्ष्यति भाष्यकारः— 'यस्यां क्रियायां सोमः सूयते अभिषूयते, सा सुत्या'-इति। तथाच सुत्यादिने इत्यस्य अभिषवक्रियादिवसे इत्यर्थः।

† 'कञ्चिद्' ख, ग।

नाम सम्यक् मिति । श्रौतः 'इति'-शब्दो ब्रह्मवाद्युद्भावितदोष-समाप्त्यर्थः । अथ तद्दोषसमाधानं विधत्ते—"व्यतिषजेद्याज्यानुवाक्याः"—इति । अत्रानेनैव ब्रह्मवादिनः तद्-वचन माहुः, न त्वत्र तदुक्तदोषोऽस्ति । तद्दोषानुदयाय 'स्वस्ति नः पथ्यासु'-इत्यारभ्य 'मही मू षु मातरम्'-इत्यन्तानां ( ७८ पृ० ) याज्यानुवाक्यानां व्यतिषङ्गं कुर्यात् । त मेव व्यतिषङ्गं विस्पष्ट-यति—"याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः कुर्याद् ; या उदयनीयस्य पुरोनुवाक्यास्ताः प्रायणीयस्य याज्याः कुर्यात् ; तद् व्यतिषजत्युभयोर्लोकयोर्ऋद्ध्या उभयोर्लोकयोः प्रति-ष्ठित्या उभयोर्लोकयोर्ऋध्नोत्युभयोर्लोकयोः प्रतितिष्ठति"—इति । 'तत्' तेन 'याः प्रायणीयस्य'-इत्युक्तप्रकारेण व्यतिषङ्गः सम्पद्यते । स च लोकद्वये भोग्यवस्तुसमृद्ध्यै, स्थैर्येणावसानाय भवति ;—तथा-नुष्ठानेन यजमानो लोकद्वये समृद्धः प्रतिष्ठितश्च भवति । यथोक्त-दोषसमाधाने तैत्तिरीया आमनन्ति—"याः प्रायणीयस्य याज्या-स्ता उदयनीयस्य याज्याः कुर्यात्, पराङमुं लोक मारोहेत् प्रमायुकः स्याद् ; याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः करोत्यस्मिन्नेव लोके प्रतितिष्ठति"—इति ( सं० ६. १. ५. ५. ) । व्यतिषङ्गवेदनं प्रशंसति—"प्रतितिष्ठति य एवं वेद"—इति ॥

योऽयं प्रथमखण्डे ( ६२ पृ० ) प्रायणीयोदयनीययोरदितिदेव-ताकश्चरुर्विहितः, त मिमं प्रशंसति—"आदित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीयो यज्ञस्य धृत्यै यज्ञस्य बलंनध्यै यज्ञस्याप्रस्रं-साय"—इति । सोमयागस्यादौ प्रायणीयेष्टिः, अन्ते चोदनीयेष्टिः; तयोरुभयोरदितिदेवताकः 'चरुः'; सोऽयं तस्य 'यज्ञस्य' धारणाय ;

मण्याकारो ग्रन्थिविशेषः तस्य बन्धनम्, तत्सिध्यर्थ मुभयत्रादित्य-चरुकरणम्; बन्धनस्थानीयेन चरुणा 'यज्ञस्य' धारणं सिध्यति। सति च धारणे यज्ञाङ्गं किञ्चिदपि स्रस्तं लुप्तं न भवति। ततो 'यज्ञस्याप्रस्रंसाय' उभयतश्चरुः। अत्र दृष्टान्त माह—"तद्यथैवाद इति ह स्माह तेजन्या उभयतोऽन्तयोरप्रस्रंसाय वसौं नह्यत्येव मेवैतद्यज्ञस्योभयतोऽन्तयोरप्रस्रंसाय वसौं नह्यति यदादित्यश्चरुः प्रायणीयो भवत्यादित्य उदनीयः"-इति। 'अदः' वक्ष्यमाणं निदर्शनं यथा भवति तथा दार्ष्टान्तिकम्—'इति' एवं कश्चिद्ब्रह्मवादी 'आह स्म'—'तेजन्या'-इत्यादिना। तावेव दृष्टान्तदार्ष्टान्तिकौ स्पष्टीक्रियेते—'तेजनिः' रज्जुः, तस्या उभयोः 'अन्तयोः' 'अप्रस्रंसाय' विश्लेषनिवारणाय लौकिकः पुरुषो 'वसौं नह्यति', मण्याकारौ ग्रन्थौ बध्नाति, 'एव मेव' चरुद्वयं 'यद्' अस्ति, तत् 'एतद्यज्ञस्य' उपक्रमोपसंहाररूपयोः 'उभयोरन्तयोः' अशैथिल्याय मण्याकारबन्धनस्थानीयं भवति॥

येयं प्रायणीये पथ्याख्या प्रथमा देवतास्ति, उदयनीये तस्या उत्तमात्व मर्थवादेनोन्नयति—"पथ्ययैवेतः स्वस्त्या प्रयन्ति पथ्यां स्वस्ति मभ्युद्यन्ति, स्वस्त्येवेतः प्रयन्ति स्वस्त्युद्यन्ति स्वस्त्युद्यन्ति" -इति। 'इतः'-शब्दः षष्ठ्यर्थे वर्त्तते। आसा माज्यहविष्काणां देवतानां मध्ये 'पथ्ययैव स्वस्त्या' एतच्छब्दद्वयाभिहितयैव देवतया 'प्रयन्ति' प्रारभन्ते; प्रायणीये तां देवतां प्रथमं यजन्तीत्यर्थः। 'पथ्यां स्वस्ति मभि' शब्दद्वयाभिहितां देवता मभिलक्ष्य 'उद्यन्ति' समापयन्ति; उदयनीये तां देवता मुत्तमां यजन्तीत्यर्थः। स्वस्त्याख्याया देवताया आद्यन्तयोर्योगे सति यजमानाः 'इतः' अस्मिन् कर्म्मणि 'स्वस्त्येव' क्षेमे एव यथा भवति तथा

'प्रयन्ति' प्रारभन्ते, तथा 'स्वस्त्ययन्ति' क्षेमेण समापयन्ति। अभ्यासोऽध्यायसमाप्त्यर्थः ॥

अथ मीमांसा। एकादशाध्यायस्य द्वितीयपादे (जै० सू० ६४—६६. अधि० १५.) चिन्तितम्—

"प्रायणीयस्य निष्कासे यो निर्वापोऽर्थकर्म्म तत्।
निष्कासप्रतिपत्तिर्वोदयनीयस्य संस्कृतिः॥
उताद्यः पूर्ववन्नैवं मुख्यस्य प्रकृतत्वतः।
मध्योऽस्तु नोपयोक्तव्यः संस्कारस्य गुरुत्वतः॥

ज्योतिष्टोमे श्रूयते—"प्रायणीयस्य निष्कास उदयनीय मभिनिर्वपति"–इति (तै० सं० ६.१.५.५.)। अत्र पूर्वन्यायेन निष्कासद्रव्यक मुदयनीय मवसानधर्म्मक मन्यत् अर्थकर्मेत्याद्यः पक्षः। मुख्यस्यैवोदयनीयस्य प्रकृतत्वाद्भिन्नप्रकरणाम्नातावभृथधर्म्मातिदेशवत् उदनीयस्य धर्म्मातिदेशस्याप्यसम्भवान्नार्थकर्म्मत्वम्। यदि तर्हि निष्कासप्रतिपत्तिरिति मध्यमः पक्षोऽस्तु, सोऽपीत्थं न सम्भवति; उपयुक्तसंस्कारादुपयोक्ष्यमाणसंस्कारस्य गरीयस्त्वात्। तस्मादुदयनीयस्य संस्कारः"–इति ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां द्वितीयाध्याये पञ्चमखण्डः ॥५(११)॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायाः द्वितीयोऽध्यायः॥

———

## ॥ अथ तृतीयाध्यायः ॥

( तत्र )

### ॥ प्रथमः खण्डः ॥

—— ॐ ——

॥ ॐ ॥ प्राच्यां वै दिशि देवाः सोमं राजान मक्रीणंस्तस्मात्प्राच्यां दिशि क्रीयते तं त्रयोदशान्मा-सादक्रीणंस्तस्मात् त्रयोदशो मासो नानुविद्यते न वै सोमविक्रय्यनुविद्यते पापो हि सोमविक्रयी तस्य क्रीतस्य मनुष्यानभ्युपावर्त्तमानस्य दिशो वीर्याणी-न्द्रियाणि व्युदसीदंस्तान्येकयर्चा ऽवारुरुत्सन्त तानि नाशक्नुवंस्तानि द्वाभ्यां तानि तिसृभिस्तानि चत-सृभिस्तानि पञ्चभिस्तानि षड्भिस्तानि सप्तभिर्नैवा-वारुन्धत तान्यष्टाभिरवारुन्धताष्टाभिराश्नुवत यद-ष्टाभिरवारुन्धताष्टाभिराश्नुवत तदष्टाना मष्टत्व मश्नुते यद्यत्कामयते य एवं वेद तस्मादेतेषु कर्मस्वष्टावष्टा-वनूच्यन्त इन्द्रियाणां वीर्याणा मवरुध्यै ॥ १ (१२) ॥

प्रायणीया तदङ्गं च देवतादिक मीरितम् ।
तथैवोदयनीया च तद्विशेषाश्च वर्णिताः * ॥

---

* द्वितीयाध्यायार्थसङ्ग्रह श्लोक एषः। तत्र पञ्चसु खण्डेषु क्रमात् ( १ ) प्रायणीयेष्टिः, ( २ ) प्रयाजाहुतिरूपं प्रायणीयाङ्गकर्म्म, ( ३ ) प्रायणीयदेवतादिकम्, ( ४ ) उदयनीया-नुष्ठेयविशेषाश्चेति पञ्चार्था उपदिष्टा इत्यर्थः।

अथ सोमप्रवहणाङ्गमन्त्रादयो वक्तव्याः। तत्रादौ सोमक्रयणस्य दिशं विधत्ते—"प्राच्यां वै दिशि देवाः सोमं राजानमक्रीणंस्तस्मात्प्राच्यां दिशि क्रीयते"-इति। प्राचीनवंशात् पूर्वस्यां 'दिशि' देवैः पुरा सोमस्य क्रीतत्वादृत्विग्भिरपि तथा सोमः क्रेतव्यः इत्यर्थः *। प्रसङ्गात्सोमविक्रयिणः प्रत्यवायं दर्शयति—"तं त्रयोदशान्मासादक्रीणंस्तस्मात् त्रयोदशो मासो नानुविद्यते; न वै सोमविक्रय्यनुविद्यते; पापो हि सोमविक्रयी"-इति। पुरा संवत्सरस्य त्रयोदश मासाः; सन्ति नेदानीम्; देवाः त्रयोदशमासस्याभिमानिनः पुरुषाः 'तं' सोमं क्रीतवन्तः। यस्मात्तदभिमानी पुरुषः सोमविक्रयी, तस्माल्लोके तदीयः 'त्रयोदशो मासो नानु विद्यते' शुभकर्मानुकूलो नास्ति। मेषादिसंक्रान्त्यादिरहितत्वान्मलमास इत्यभिप्रेत्य तस्मिन्मासे शिष्टाः शुभकर्माणि वर्जयन्ति। अतएवेदानीमपि 'सोमविक्रयी' शिष्टाचारस्यानुकूलो 'न' एव 'विद्यते'। सोमविक्रयिणः पापरूपत्वे श्रुत्यन्तरप्रसिद्धिद्योतनार्थो 'हि'-शब्दः। अत एव श्रुत्यन्तरे तद्विषयो मन्त्र एवं व्याख्यायते—"अस्मे ज्योतिः सोमविक्रयिणि तम इत्याह; ज्योतिरेव यजमाने दधाति; तमसा सोमविक्रयिणमर्पयति"-इति ( तै० सं० ६. १. १०. ४. † )। अत्र 'तमः'-शब्दः पापवाची॥

---

* सोमक्रयाख्यायिकादिकं तु पञ्चमे वक्ष्यति; सोमक्रयप्रकारादयस्त्वाध्वर्यवेषु विशेषतः श्रुताः।

† 'अस्मे ज्योतिः'-इत्येकः, 'सोमविक्रयिणि तमः'-इत्यपरः; तैत्तिरीयके श्रूयेते ( सं० १.२.७.)। तयोरेव व्याख्यानायेदं ब्राह्मणम्। तत्राद्यस्य विनियोग एवं प्रोक्त आपस्तम्बेन —'अस्मे ज्योतिरिति शुक्लां मूर्णास्तुकां यजमानाय प्रयच्छति'-इत्यादि ( १०. २६. ११. ), द्वितीयस्य चैवम्—'कृष्णा मूर्णास्तुका मणिः ग्रन्थयित्वेद महं सर्पाणां दन्दशूकानां ग्रीवा उप-

अथादूर्ध्वं प्राचीनवंशं प्रति नीयमाने सोमे पठितव्याना मृचा मष्टसङ्ख्या मादौ प्रशंसति—‘तस्य क्रीतस्य मनुष्यानभ्युपावर्त्तमानस्य दिशो वीर्याणीन्द्रियाणि व्युदसीदंस्तान्येकयर्चाऽवारुरुत्सन्त तानि नाशक्नुवंस्तानि द्वाभ्यां तानि तिसृभिस्तानि चतसृभिस्तानि पञ्चभिस्तानि षड्भिस्तानि सप्तभिर्नैवावारुन्धत, तान्यष्टाभिरवारुन्धताष्टाभिराश्नुवत; यदष्टाभिरवारुन्धताष्टाभिराश्नुवत, तदष्टाना मष्टत्वम्”-इति। क्रीतः सोमो यदा ‘मनुष्यान्’ यजमानादीन् ‘अभि’ लक्ष्य आगच्छति, तदानीं ‘तस्य’ सोमस्य दिगादीनि ‘व्युदसीदन्’ विशेषेणोत्सन्नान्यभवन्। दिक्शब्देनाधिष्ठान मुपलक्ष्यते। सोमं नेतुं यदधिष्ठानम्, यच्च वीर्यं सोमनिष्ठम् बलप्रदान सामर्थ्यम्, यच्चेन्द्रियं चक्षुरादिपाटवहेतुत्वम्, तत्सर्वं विनष्टम्। तदानीं ते यजमाना ये मनुष्याः, ‘तानि’ दिगादीनि ‘एकयर्चा’ अवरोद्धुं स्वाधीनं कर्त्तुम् ऐच्छन्, ततः ‘तानि’ अवरोद्धुं ‘नाशक्नुवन्’। एवं द्वित्वादिसप्तपर्यन्ततया मन्त्रसङ्ख्यया नैवावरोधं कृतवन्तः; अष्टसङ्ख्यया त्ववरोधं कृत्वा तानि दिगादीनि प्राप्तवन्तः। तस्मादवरुध्यन्त एभिर्नश्यन्त एभिरिति वा व्युत्पत्त्या अष्टशब्दो निष्पन्नः। एतद्वेदनं प्रशंसति—“अश्नुते यद्यत्कामयते य एवं वेद”-इति। तत्काम्य मश्नुत इति योज्यम्। इदानी मष्टसङ्ख्यां विधत्ते—“तस्मादेतेषु कर्म्मस्वष्टावष्टावनूच्यन्त इन्द्रियाणां वीर्याणा मवरुध्यै”-इति *। इदानीं प्रस्तुतं सोमप्रवहणाख्यं यत्कर्म्म, तत्र करिष्यमाणं कर्म्मान्तरम्, तथाविधेषु प्रत्येकम् ‘अष्टौ

---

यष्टामीतुग्रपग्रथ्य तया सोमविक्रयिणं विध्यति सोमविक्रयिणि तम इति’-इति (१४.)। ‘अविलोमभिर्निर्मिता तन्तुः, ऊर्णास्तुका’-इति तै० सा० भा०।

* तत्र सोमप्रवहण्यो नामाष्टौ ऋच उत्तरस्मिन्नेव खण्डे विधास्यन्ते।

षष्टी' ऋचो होतानुब्रूयात् । तथाष्टसङ्ख्यया इन्द्रियाणि वीर्याणि चावरुन्धानि भवन्ति ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां तृतीयाध्याये
प्रथमः खण्डः ॥ १ (१२) ॥

---

॥ अथ द्वितीयः खण्डः ॥

सोमाय क्रीताय प्रोह्यमाणायानुब्रूहीत्याहाध्वर्यु-र्भद्रादभि श्रेयः प्रेहीत्यन्वाहायं वाव लोको भद्र-स्तस्मादसावेव लोकः श्रेयान्त्स्वर्गमेव तं लोकं यज-मानं गमयति' बृहस्पतिः पुर एता ते अस्त्विति ब्रह्म वै बृहस्पतिर्ब्रह्मैवास्मा एतत्पुरोगवं' मकर्ण वै ब्रह्मणवद्रिष्यत्यथेमवस्य वर आ पृथिव्या इति' देवयजनं वै वरं पृथिव्यै' देवयजन एवैनं तदवसाय-यत्यारे शत्रून् कृणुहि सर्ववीर इति' द्विषन्तमेवास्मै तत्पाप्मानं' भ्रातृव्य मपबाधते ऽधरं पादयति' सोम यास्ते मयोभुव इति तृचं सौम्यं' गायत्रमन्वाह सोमे राजनि प्रोह्यमाणे' स्वयैवैनं तद्देवतया' स्वेन

छन्दसा समर्धयति सर्वे नन्दन्ति यशसागतेनेत्यन्वाह
यशो वै सोमो राजा सर्वो ह वा एतेन क्रीय-
माणेन नन्दति यश्च यज्ञे लप्स्यमानो भवति यश्च
न सभासाहेन सख्या सखायेत्येष वै ब्राह्मणानां
सभासाहः सखा यत् सोमो राजा किल्बिषस्पृ-
दित्येष उ एव किल्बिषस्पृद् यो वै भवति यः श्रेष्ठता
मश्नुते स किल्बिषं भवति तस्मादाहुर्मानुवोचो
मा प्रचारीः किल्बिषन्नु मा यातयन्निति पितुषणि-
रित्यन्नं वै पितु दक्षिणा वै पितु ता मेनेन सनोत्यन्न-
सनि मेवैनं तत् करोत्यरंहितो भवति वाजिनाये-
तीन्द्रियं वै वीर्यं वाजिन माजरसं हास्मै वाजिनं
नापच्छिद्यते य एवं वेदागन्देव इत्यन्वाहागतो हि
स तर्हि भवत्यृतुभिर्वर्धतु क्षय मित्यृतवो वै सोमस्य
राज्ञो राजभ्रातरो यथा मनुष्यस्य तैरेवैनं तत्सहा-
गमयति दधातु नः सविता सुप्रजा मिष मित्याशिष
माशास्ते स नः क्षपाभिरहभिश्च जिन्वत्वित्यहानि वा
अहानि रात्रयः क्षपा अहोरात्रैरेवास्मा एता माशिष
माशास्ते प्रजावन्तं रयि मस्मे समिन्वत्वित्याशिष
मेवाशास्ते या ते धामानि हविषा यजन्तीत्यन्वाह ता
ते विश्वा परिभूरस्तु यज्ञं गयस्फानः प्रतरणः सुवीर

इति गवां नः स्फावयिता* प्रतारयितेत्येवैतदाहावीरहा प्र चरा सोम दुर्यानिति गृहा वै दुर्या बिभ्यति वै सोमाद्राज्ञ आयतो यजमानस्य गृहाः स यदेता मन्वाह शान्त्यैवैनं तच्छमयति सोऽस्य शान्तो न प्रजां न पशून् हिनस्तीमां धियं शिक्षमाणस्य देवेति वारुण्या परिदधाति वरुणदेवत्यो वा एष तावद्यावदुपनद्धो यावत्परिश्रितानि प्रपद्यते स्वयैवैनं तद्देवतया स्वेन छन्दसा समर्द्धयति शिक्षमाणस्य देवेति शिक्षते वा एष यो यजते क्रतुं दक्षं वरुण संशिशाधीति वीर्यं प्रज्ञानं वरुण संशिशाधीत्येव तदाह ययाति विश्वा दुरिता तरेम सुतर्माणमधिनावं रुहेमेति यज्ञो वै सुतर्मा नौः कृष्णाजिनं वै सुतर्मा नौर्वाग्वै सुतर्मा नौर्वाचमेव तदारुह्य तया स्वर्गं लोकमभि सन्तरति ता एता अष्टावन्वाह रूपसमृद्धा एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म्म क्रियमाणमृगभिवदति तासां त्रिः प्रथमा मन्वाह त्रिरुत्तमां ता द्वादश सम्पद्यन्ते द्वादश वै मासाः संवत्सरः संवत्सरः प्रजापतिः प्राजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद त्रिः

---

* 'न स्फावयिता'—इति निर्विसर्गपाठः ख, ग, घ ।

**प्रथमां त्रिरुत्तमा मन्वाह यज्ञस्यैव तद्बर्सौ नह्यति स्थेम्ने बलायाविस्रंसाय ॥ २ ( १३ ) ॥**

मन्त्रगतां सङ्ख्यां विधाय मन्त्रान् विधातु मादौ प्रैषमन्त्रं विधत्ते—"सोमाय क्रीताय प्रोह्यमाणायानुब्रूहीत्याहाध्वर्युः"-इति । यः सोमः क्रीतः, सः क्रयदेशात् प्राचीनवंशं प्रति प्रोह्यते, नीयते ; तदर्थं मनुकूला ऋचो हे होतः ! अनुक्रमेण ब्रूहि । त मेवं प्रैषमन्त्र मध्वर्युः पठेत् । अथ होतुः प्रथमा मृचं विधत्ते—"भद्रादभि श्रेयः प्रेहीत्यन्वाह"-इति । सेय मृक् तैत्तिरीय-शाखाया मेव माम्नाता *—"भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुर एता ते अस्तु । अथे मवस्य वर आ पृथिव्या आरे शत्रून् कृणुहि सर्ववीरः"-इति ( सं० १. २. ३. ३. )। तस्याय मर्थः—हे सोम! 'भद्रात्' मङ्गलात्, भूलोकरूपात् तस्मात् क्रयदेशात् 'श्रेयः' श्रेष्ठम् स्वर्गलोकस्थानीयं प्राचीनवंशदेशम् 'अभि' लक्ष्य 'प्रेहि' प्रकर्षेण आगच्छ । तथागच्छतः 'ते' 'बृहस्पतिः' 'पुरः एता' पुरतो गन्ता 'अस्तु' । 'अथ' गमनादूर्ध्वम्, 'पृथिव्याः' सम्बन्धिनि 'आ' समन्तात् 'वरे' श्रेष्ठे देवयजने 'ईम् अवस्य' इदं तवावस्थानयोग्यं स्थानं निश्चिनु । सर्वेभ्यः 'वीरः' शूरस्त्वं 'शत्रून्' पापरूपान् यज्ञ-विद्वेषिणः 'आरे कृणुहि' दूरे कुरु, निराकुर्वित्यर्थः । तस्या मृचि प्रथमपादं व्याचष्टे—"अयं वाव लोको भद्रस्तस्मादसावेव लोकः श्रेयान्स्वर्ग मेव तल्लोकं यजमानं गमयति"-इति । 'तत्' तेन

---

* न तु समाम्नातीयेति यावत् । अतएवाश्वलायनेन प्रपठ्य विहितः, न तु प्रतीक-ग्रहणमात्रेणेति द्रष्टव्यम् ( आश्व० श्रौ० ४. ४. २. )। एषा शैली कल्पसूत्रकाराणां प्रायः सर्वत्रैव ।

प्रथमपादपाठेन *। स्पष्ट मन्यत् । द्वितीयपाद मनूद्य व्याचष्टे— "बृहस्पतिः पुर एता ते अस्त्विति; ब्रह्म वै बृहस्पतिर्ब्रह्म-वास्मा एतत् पुरोगव मकर्न वै ब्रह्मण्वद्रिष्यति"–इति । बृहस्पतेः ब्रह्मत्वं ब्राह्मणजातिमत्त्वम् "ब्रह्म वै देवानां बृहस्पतिः"–इत्यादि-श्रुत्यन्तरे प्रसिद्धम् (तै०सं० २.२.८.१. †) । 'एतत्' एतेन द्वितीय-पादपाठेन 'अस्मै' यजमानार्थम् 'ब्रह्म एव' ब्राह्मण मेव 'पुरो-गवम्' पुरोगन्तारम् 'अकः' करोति; 'ब्रह्मण्वत्' ब्राह्मणसहायोपेतं कर्म्म 'न वै रिष्यति' सर्वथा नाशं न प्राप्नोति । तृतीयपाद मनूद्य व्याचष्टे—"अथे मवस्य वर आ पृथिव्या इति, देवयजनं वै वरं पृथिव्यै देवयजन एवैनं तदवसाययति; आरे शत्रून् कृणुहि सर्व-वीर इति; द्विषन्त मेवास्मै तत्पाप्मानं भ्रातृव्य मपबाधते ऽधरं पादयति"–इति । देवयजनाख्यस्य यागदेशस्य पृथिवीसम्बन्धि-श्रेष्ठस्थानत्वात् तत्र 'एव' 'एनं' सोमं 'तत्' तेन तृतीयपादपाठेन 'अस्मै' यजमानाय द्वेषं कुर्वन्तं पापरूपं शत्रुम् 'अपबाधते', 'अधरं पादयति' निकृष्टं पदं प्रापयतीत्यर्थः ॥

होत्रानुवक्तव्या द्वितीयाद्यास्तिस्र ऋचो विधत्ते—"सोम यास्ते मयोभुव इति तृचं सौम्यं गायत्र मन्वाह; सोमे राजनि प्रोह्य-माणे स्वयैवैनं तद्देवतया स्वेन छन्दसा समर्धयति"–इति । तिसृणा मृचां सङ्घातस्तृचः ‡ । स च सोमदेवताको गायत्रीच्छन्दस्कश्च । सोमानयनकाले तं तृच मनुब्रूयात् § । 'तत्' तेनानुवचनेन स्वाभ-

* 'तन्नीकं'–इति ख, ग ( ८५ पृ० १० पं० ); तत्पाठ मवलम्ब्यावैतद् भाष्यम् ।

† इहाप्युपरिष्टात् 'ब्रह्म वै बृहस्पतिः, क्षत्रं सोम आसीत्'–इति २. ५. ६ ।

‡ 'ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि'–इति पा० ६. १. ३४. वा० ।

§ स च तृचः ऋ० सं० १.९१.९,१०,११ । आश्वलायनेनाप्यत्र विहितः (४.४.४. ) ।

रूपया 'देवतया' स्वकीयच्छन्दसा च 'एनं' सोमं समृद्धं करोति। अत्र नीयमानद्रव्यविशेषः सोमः ; मन्त्रदेवताप्यसावेव। तस्मात् स्वात्मरूपत्वम्। गायत्री द्युलोकात्सोम मानीतवती। तैत्तिरीयाः कद्रुश्चेत्यनुवाके समामनन्ति ( सं० ६. १. ६. १. ) *। तस्मात् छन्दसः स्वकीयत्वम् ॥

पञ्चमी मृचं विधत्ते—"सर्वे नन्दन्ति यशसागतेनेत्यन्वाह"-इति। सा च संहितायामेव माम्नाता—"सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः। किल्बिषस्पृत्पितुषणिर्ह्येषा मरं हितो भवति वाजिनाय"-इति ( १०. ७१. १०. )। तस्या ऋचोऽय मर्थः—'सर्वे सखायः' यजमानप्रभृतयः 'सख्या' सोमरूपेण 'नन्दन्ति' तुष्यन्ति। कीदृशेन सख्या? 'यशसा' यशोहेतुना 'आगतेन' समीपं प्राप्तेन, 'सभासाहेन' विद्वत्सभां विद्याप्रसङ्गेन सहते अभिभवति सभासाहः, तादृशेन। स तादृशः सोमरूपः सखा, 'एषाम्' ऋत्विग्यजमानानां 'किल्बिषस्पृत्' किल्बिषात् पापात् स्पृणोति पालयति किल्बिषस्पृत्। 'पितु'-शब्दोऽन्नवाची †, तस्य सनिर्दानं येन सोमेन लभ्यते, सोऽयम् 'पितुषणिः'। सोमस्य पापनिवारकत्व मन्नप्रदानेन। सर्वशास्त्रप्रसिद्धिद्योतनार्थो 'हि' शब्दः। तथायं सोमो वाजिनशब्दाभिधेयायेन्द्रियाय वीर्याय वा 'अरं हितः' अलम् अत्यन्तं हितो भवतीति। तस्या ऋचः प्रथमं पादं व्याचष्टे—"यशो वै सोमो राजा; सर्वो ह वा एतेन क्रीयमाणेन नन्दति, यश्च यशो लप्स्यमानो भवति, यश्च न"-इति। यशःकारणात् सोमस्य यशस्त्वम्। 'यः'

* तथा शतपथेऽपि द्रष्टव्यम्—'दिवि वै सोम आसीत्'-इत्यादिः ३. २. ४।

† 'पितुरित्यन्ननाम ; पातेर्वा पिबतेर्वा प्यायतेर्वा'-इत्यादि निरु० ९. ३. ३।

पुमान् ऋत्विग् भूत्वा 'यज्ञे' धनं लप्स्यते, 'यश्च' इष्ट्, मागतः 'न' तु धनार्थी ; 'सर्वः' अप्यसौ सोमक्रयणं दृष्ट्वा तुष्यति । द्वितीय-पाद मनूद्य व्याचष्टे—"सभासाहेन सख्या सखाय इत्येष वै ब्राह्मणानां सभासाहः सखा, यत् सोमो राजा"-इति । योऽयं राजमानः सोमः, सोऽयं ब्राह्मणसभा मतिभवति, सर्वे ब्राह्मणाः सोमाधीना भवन्तीत्यर्थः । तृतीयपादे प्रथमं पद मनूद्य व्याचष्टे —"किल्बिषस्पृदित्येष उ एव किल्बिषस्पृद्"-इति । योऽयं सोमोऽस्ति, 'एष उ एव' किल्बिषात् पालयति ; सर्वकामहेतोः सोमयागस्य पापक्षयायानुष्ठातुं शक्यत्वात् । यज्ञानुष्ठाने च प्रवृत्ताना मृत्विग्यजमानानां कः किल्बिषप्रसङ्गः ? इत्याशङ्क्याह —"यो वै भवति, यः श्रेष्ठता मश्नुते, स किल्बिषं भवति"-इति । 'यः' पुमान् प्रौढ़े यज्ञे प्रवृत्तो 'भवति', तथापि 'यः' 'श्रेष्ठतां' प्रयोगपाटवाभिमानम् 'अश्नुते' प्राप्नोति, 'सः' तादृशः पुरुषः कर्म्म-समाप्ति-व्यग्रतया पण्डितम्मन्यत्वेन वाग्वैकल्यं कुर्वन् 'किल्बिषं भवति' पापं प्राप्नोति । त मेतं पापप्रसङ्गं विस्पष्टयति—"तस्मा-दाहुर्मा नु वोचो मा प्रचारीः ; किल्बिषन्नु मा यातयन्निति"-इति । यस्मादृत्विजां किल्बिषं सम्भाव्यते, 'तस्माद्' यजमानाः एवम् 'आहुः'—हे होतः ! त्वम् 'मा नु वोचः' अन्यचित्तः सन् पुरोनुवाक्यां मा पठ । हे अध्वर्यो ! 'मा प्रचारीः' व्यग्रतया प्रचार मन्यथानुष्ठानं मा कार्षीः । 'नु' क्षिप्रं कुर्वन्तो भवन्तः 'किल्बिषं' 'मा यातयन्' मा प्राप्नुवन्तः । 'इति'शब्दो यज-मानाना मुक्तिसमाप्तौ । इत्थं सम्भावितात् किल्बिषात् सोमः पालयति । तृतीयपादे द्वितीयपद मनूद्य व्याचष्टे—"पितुषणि-रित्यन्नं वै पितु ; दक्षिणा वै पितु ; ता मेनेन सनोत्यन्नसनि-

मेवैनं तत्करोति"-इति। अन्नवाची पितुशब्दो लक्ष्यलक्ष-साम्यात् दक्षिणा मप्युपलक्षयति। 'तां' दक्षिणा मेतेन सोमेन निमित्तभूतेन 'सनोति' ऋत्विग्भ्यो ददाति। 'तत्' तेन, पितुशब्द-पाठेन 'एनं' सोमम् 'अन्नसनिम्' अन्नदाननिमित्तभूतम् 'एव करोति'। चतुर्थं पाद मनूद्य तत्र वाजिनशब्दं व्याचष्टे—"अर्हितो भवति वाजिनायेतीन्द्रियं वै वीर्यं वाजिनम्"-इति। वेदनं प्रशंसति—"आजरसं हास्मै वाजिनं नापच्छिद्यते य एवं वेद" -इति। जरासमाप्तिपर्यन्तं वेदितुरिन्द्रियवीर्ययोरपच्छेदो न भवति॥

षष्ठी मृचं विधत्ते—"आगन्देव इत्यन्वाह"-इति। स च मन्त्रः संहितायां माम्नातः—"आगन् देव ऋतुभिर्वर्धतु क्षयं दधातु नः सविता सुप्रजा मिषम्। स नः क्षपाभिरहभिश्च जिन्वतु प्रजावन्तं रयि मस्मे समिन्वतु"-इति (४. ५३. ७.)। तस्याय मर्थः। सोमो 'देवः' 'आगन्' इह कर्मणि आगच्छतु। आगत्य च 'ऋतुभिः' सह 'क्षयं' निवासस्थानं 'वर्धतु' वृद्धिं प्रापयतु। 'नः' अस्माकं 'सविता' प्रेरकः स देवः 'सुप्रजां' शोभनापत्यम्, 'इषम्' अन्नं च 'दधातु' सम्पादयतु। 'सः' देवः 'नः' अस्मान् 'क्षपाभिः' रात्रिभिः, अहोभिः च 'जिन्वतु' प्रीणयतु। तथा 'प्रजावन्तं रयिम्' प्रजोपेतं धनम् 'अस्मे समिन्वतु' अस्मासु सम्यक् प्रापयत्विति।

अस्या ऋचः प्रथमपादे पूर्वभागं व्याचष्टे—"आगतो हि स तर्हि भवति"-इति। 'तर्हि' तस्मिन् क्रयोत्तरकाले 'सः' सोमः 'आगतो भवति'-इति प्रसिद्धम्। उत्तरभाग मनूद्य व्याचष्टे—"ऋतुभिर्वर्धतु क्षय मित्यृतवो वै सोमस्य राज्ञो राजभ्रातरो यथा

मनुष्यस्य ; तैरेवैनं तत्सहागमयति"–इति । यथा लोके कस्य-चिन्मनुष्यस्य भ्रातरोऽपि मनुष्यजातीयाः, तथा राजजातीयस्य सोमस्य भ्रातरोऽपि राजजातीयाः । 'तत्' तेन मन्त्रभागपाठेन 'तैः' ऋतुभिः भ्रातृभिः 'सह' 'एनं' सोम मस्मिन् कर्म्मणि 'आगमयति' । द्वितीयपाद मनूद्य व्याचष्टे—"दधातु नः सविता सुप्रजा मिष मित्याशिष माशास्ते"–इति । आशासनीयोऽपेक्षणीयः प्रजादिपदार्थ आशीः ; ताम्, अनेन पादपाठेन 'आशास्ते' । तृतीय-पाद मनूद्य व्याचष्टे—"स नः क्षपाभिरहभिश्च जिन्वत्वित्य-हानि वा अहानि, रात्रयः क्षपाः, अहोरात्रैरेवास्मा एता माशिष माशास्ते, प्रजावन्तं रयि मस्मे समिन्वत्वित्याशिष मेवाशास्ते" –इति । लोकप्रसिद्धानि 'अहानि' एवात्र मन्त्रोक्तानि 'अहानि'; अहोभिरिति वक्तव्ये वर्णविकारेणाहभिरित्युक्तत्वात् * । शब्दा-न्तरभ्रमव्युदसितु मिदं व्याख्यानम् ;—एव मत्र व्याख्यातव्यः पदविशेषो नास्ति, किन्तु आशीः-प्रार्थनरूपं तात्पर्यं मेवेत्यभिप्रेत्य 'एव'कारः प्रयुक्तः ॥

सप्तमी मृचं विधत्ते—"या ते धामानि हविषा यजन्तीत्य-न्वाह"–इति । सेय मृक् संहिताया माम्नाता—"या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रत-रणः सुवीरो ऽवीरहा प्र चरा सोम दुर्यान्"-इति (१. ९१. १९.)। हे सोम! 'ते' तव 'धामानि' यान्युत्तरवेद्यादिस्थानानि, यजमानाः 'हविषा यजन्ति', 'ते' तव, 'ता विश्वा' तानि सर्वाणि स्थानानि व्याप्येति शेषः । ततो भवान् 'यज्ञ" 'परिभूरस्तु' परितः प्राप्तवान् भवतु । किञ्च त्वं 'गयस्फानः' गयानाम् अस्मदीयानां गवां वर्द्ध-

* 'कालसमयवेलासु तुमुन्' ... 'इति पा० ३. १. ८५. वा० ।

यिता, 'प्रतरणः' प्रतारयिता सर्वापदुत्तारणहेतुः, 'सुवीरः' शोभन-पुत्रपौत्रादिप्रदो भवेति शेषः। हे सोम! 'अवीरहा' अस्म-दीयानां वीरपुरुषाणां हनन मकुर्वाणो 'दुर्यान्' अस्मदीयगृहान् प्रति 'प्र चर' प्रकर्षेणागच्छ।

अत्र प्रथमपादस्य स्पष्टार्थत्वबुध्या व्याख्यान मुपेक्ष्य द्वितीय-पाद मपि स्पष्टार्थाभिप्रायेणैव पठति—"ता ते विश्वा परिभू-रस्तु यज्ञम्"–इति। तृतीयपाद मनूद्य व्याचष्टे—"गयस्फानः प्रतरणः सुवीर इति; गवां नः स्फावयिता प्रतारयितेधीत्येव तदाह"–इति। 'स्फावयिता' वर्धयिता। चतुर्थपाद मनूद्य व्याचष्टे—"अवीरहा प्र चरा सोम दुर्यानिति; गृहा वै दुर्याः, बिभ्यति वै सोमाद्राज्ञ आयतो यजमानस्य गृहाः; स यदेता मन्वाह शान्त्यैवैनं तच्छमयति; सो ऽस्य शान्तो न प्रजां न पशून् हिनस्ति"–इति। 'आयतः' आगच्छतः 'सोमात् राज्ञः' 'यज-मानस्य' 'गृहाः' गृहवर्त्तिनो वीरपुरुषाः। केनापि परिचर्या-वैकल्येन राजा कोपं करिष्यतीति मत्वा, तस्मात् सर्वे 'बिभ्यति'। तदानीं 'सः' होता यदि 'एताम्' अवीरहेतिपदयुक्ता मृचम् 'अन्वाह', 'तत्' तेनानुवचनेन 'शान्त्या' शान्तिहेतुभूतया सुवीर-पदोक्त्यैवैतं राजानं 'शमयति' शान्तं करोति, 'सः' च राजा 'शान्तः' सन् 'अस्य' यजमानस्य पुत्रादिकाम् 'प्रजां' गवादिपशूंश्च 'न हिनस्ति'॥

अष्टमी मृचं विधत्ते—"इमां धियं शिक्षमाणस्य देवेति वारुण्या परिदधाति"–इति। इय मृक् वरुणदेवताका; तया 'परिदधाति' अनुवचनं समापयेदित्यर्थः। सेय मृक् संहितायां मेव माम्नाता—"इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं

शिशाधि। ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेम"–इति ( ८. ४२. ३. )। तस्याय मर्थः—हे 'वरुण !' देव ! 'इमां' 'धियं' यज्ञानुष्ठानविषयां बुद्धिं 'शिक्षमाणस्य' अभ्यस्यतो यजमानस्य 'क्रतुं' यज्ञविषयं वीर्यम्, 'दक्षं' कौशलं यज्ञविषयप्रज्ञानं 'सं शिशाधि' सम्यगुपदिश। 'यया' वाग्रूपया नावा 'विश्वा दुरिता' सर्वाणि पापानि 'अति तरेम', तादृशीं 'सुतर्माणं' सुष्ठु-तरणहेतुं वाग्रूपां 'नावम्' 'अधि रुहेम' आधिक्येनारोहणं कुर्म इति।

वारुण्या समापने कारण माह—"वरुणदेवत्यो वा एष तावद्यावदुपनद्धो यावत्परिश्रितानि प्रपद्यते, स्वयैवैनं तद्देवतया स्वेन च्छन्दसा समर्द्धयति"–इति। 'यावत्' कालं सोमः 'उपनद्धः' वस्त्रादिना बद्धः स्यात्, 'यावत्' च 'परिश्रितानि' प्राचीनवंशादिस्थानानि 'प्रतिपद्यते', तावत् 'एषः' सोमो वरुणदेवताकः; बन्धनस्य वरुणपाशाधीनत्वात्*, आवरणस्यापि वरुणाधीनत्वात्†। 'तत्' तथा सति वारुण्या परिदधानो होता 'स्वयैव' सोमसम्बन्धिन्यैव 'देवतया' 'स्वेन' सम्बन्धिना 'छन्दसा' तम् 'एनं' सोमं समृद्धं करोति‡।

अस्या ऋचस्त्रिष्टुप् छन्दः। सा च त्रिष्टुप्, सोम माहर्तुं द्युलोके गत्वा दक्षिणां तपश्चाहृतवती। तथाच शाखान्तरे श्रूयते—"सा दक्षिणाभिश्च तपसा चागच्छति"–इति ( तै० सं० ६. १. ६. २. )। तस्मादिदं छन्दः सोमस्य स्वकीयम्।

---

* 'उदुत्तमं वरुण पाशम् ( ऋ० सं० १. २४. १५. )'–इत्यादि च तत्र मन्त्रलिङ्गम्।

† 'वरुणो वृणोतीति सतः'–इति निरु० १०. १. ३।

‡ "वारुणो वै क्रीतः सोम उपनद्धः"–इत्यादि, वारुण्या परिचरति स्वयैवैनं देवतया परिचरतीत्यन्तम् ब्राह्मणम् तै० सं० ६. १. ११; एतदीयमन्त्रास्तु १. २. ७—९।

प्रथमपादे शिक्षमाणस्येति पदं व्याचष्टे— "शिक्षमाणस्य देवेति शिक्षते वा एष यो यजते"-इति। पुनःपुनरभ्यासः शिक्षा। यजनशीलस्य सोऽस्ति। द्वितीयपाद मनूद्य व्याचष्टे— "क्रतुं दक्षं वरुण सं शिशाधीति, वीर्यं प्रज्ञानं वरुण सं शिशाधीत्येव तदाह"-इति। द्वितीयार्धं मनूद्य व्याचष्टे—"ययाति विश्वा दुरिता तरेम, सुतर्माण मधि नावं रुहेमेति; यज्ञो वै सुतर्मा नौः; कृष्णाजिनं वै सुतर्मा नौर्वाग्वै सुतर्मा नौः; वाच मेव तदारुह्य तया स्वर्गं लोक मभि सन्तरति"-इति। यत्र यज्ञस्य वा कृष्णाजिनस्य वा प्रस्तावः, तत्र तत्परत्वेन सुतर्मशब्दो व्याख्येयः; इह तु मन्त्ररूपा वाक् विवक्षिता। 'तत्' तेन मन्त्रपाठेन वाग्रूपा मेव नावम् 'आरुह्य' 'तया' नावा 'स्वर्गम्' 'अभि'लक्ष्य सम्यक् स्वर्गं 'तरति' ॥

उक्ताः सर्वा ऋचः प्रशंसति—"ता एता अष्टावन्वाह रूपसमृद्धाः"-इति। विवक्षितार्थप्रतिपादकेन रूपेण समृद्धाः*। ता मेव समृद्धिं विशदयति—"एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धम्; यत्कर्म क्रियमाण मृगभिवदति"-इति। पूर्ववद् व्याख्येयम् (४५ पृ० ११ पं०)। आद्यन्तयोः ऋचोरावृत्तिं विधत्ते— "तासां त्रिः प्रथमा मन्वाह, त्रिरुत्तमाम्"-इति। आवृत्तिसहितानां सर्वासां सङ्ख्यां प्रशंसति—"ता द्वादश सम्पद्यन्ते; द्वादश वै मासाः संवत्सरः; संवत्सरः प्रजापतिः"-इति। वेदनं प्रशंसति— "प्रजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद"-इति। आवृत्तिं

---

* एता एवाष्टावृचः सोमप्रवहण्य उच्यन्ते। आश्वलायनेन तु विहिता विशेषतः (४.४.१, ४, ६.), तथा कात्यायनेनापि ७.९.२२—२४। तत्र सोमस्योपोत्थानादिमन्त्रास्तु तै० सं० १.२.८ अनु०। तद्ब्राह्मणं च ६.१.११ अनु०।

प्रशंसति—"त्रिः प्रथमां त्रिरुत्तमा मन्वाह, यज्ञस्यैव तद् बर्सौ नह्यति, स्थेम्ने बलायाविस्रंसाय"-इति। 'तत्' तेनावर्त्तनेन 'बर्सौ' रज्ज्वाः उभयोरन्तयोः स्थितौ मस्ताकारौ ग्रन्थी। तद्-द्वयापि 'नह्यति' बध्नाति। तच्च बन्धनं 'स्थेम्ने' स्थैर्याय भवति। तस्यैवान्वयव्यतिरेकाभ्यां व्याख्यानं प्राबल्य मविस्रंसनं च॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां तृतीयाध्याये
द्वितीयः खण्डः॥ २ ( १३ )॥

---

॥ अथ तृतीयः खण्डः॥

अन्यतरोऽनड्वान् युक्तः स्यादन्यतरो विमुक्तो ऽथ राजान मुपावहरेयुर्यदुभयोर्विमुक्तयोरुपावहरेयुः पितृदेवत्यं राजानं कुर्युर्यद्युक्तयोरयोगक्षेमः प्रजा विन्देत् ताः प्रजाः परिप्लवेरन् यो ऽनड्वान्विमुक्तस्त-च्छालासदां प्रजानां रूपं यो युक्तस्तच्चक्रियाणां ते ये युक्ते ऽन्ये विमुक्ते ऽन्य उपावहरन्त्युभावेव ते क्षेमयोगौ कल्पयन्ति देवासुरा वा एषु लोकेषु समयतन्त त एतस्यां प्राच्यां दिश्ययतन्त तांस्ततो ऽसुरा अजयंस्ते दक्षिणस्यां दिश्ययतन्त तांस्ततो ऽसुरा अजयंस्ते प्रतीच्यां दिश्ययतन्त तांस्ततो ऽसुरा अजयंस्त

उदीच्यां दिश्ययतन्त तांस्ततो ऽसुरा अजयंस्त उदीच्यां प्राच्यां दिश्ययतन्त ते ततो न पराजयन्त सैषा दिगपराजिता तस्मादेतस्यां दिशि यतेत वा यातयेद्वेश्वरो हानृणा कर्तोस्ते देवा अब्रुवन्नराजतया वै नो जयन्ति राजानं करवामहा इति तथेति ते सोमं राजान मकुर्वंस्ते सोमेन राज्ञा सर्वा दिशो जयन्नेष वै सोमराजा * यो यजते प्राचि तिष्ठ-त्याद्धति तेन प्राचीं दिशं जयति तं दक्षिणा परि-वहन्ति तेन दक्षिणां दिशं जयति तं प्रत्यञ्च मावर्त्त-यन्ति तेन प्रतीचीं दिशं जयति त मुदीचस्तिष्ठत उपावहरन्ति तेनोदीचीं दिशं जयति सोमेन राज्ञा सर्वा दिशो जयति य एवं वेद ॥ ३ ( १४ ) ॥

सोमप्रवहणीर्ऋचो विधाय सोमस्य शकटादवरोहणं विधत्ते —"अन्यतरोऽनड्वान् युक्तः स्यादन्यतरो विमुक्तोऽथ राजान मुपाव-हरेयुः"–इति। अयं देशे सोमं शकटे प्रक्षिप्य प्राचीनवंशसमीपे समानीय शकटबद्धयोरनडुहोर्मध्ये कञ्चिदनड्वाहं विमुच्य इतर मविमुच्य 'राजानं' शकटादधस्तादृत्विजः 'उपावहरेयुः'। 'युक्तः' शकटे बद्धः। 'विमुक्तः' शकटाद्वियोजितः। उभयोरनडुहो-र्विमोचने दोष मुद्भावयति † —"यदुभयोर्विमुक्तयोरुपावहरेयुः पितृदेवत्यं राजानं कुर्युः"–इति। राज्ञः सोमस्य पितृभिः स्वीक-

* 'सोमो राजा' क। † 'मुपन्यस्यति' ग, घ।

त्वादयं सोमो देवयोग्यो न भवेत् । उभयोरनडुहोः शकटयोगे- ऽपि दोष माह—"यद् युक्तयोरयोगक्षेमः प्रजा विन्देत्, ताः प्रजाः परिप्लवेरन्"—इति । अप्राप्तस्य धनादेः सम्पादनं योगः, प्राप्तस्य रक्षणं क्षेमः ; योगसहितः क्षेमो योगक्षेमः, तदभावः ; 'प्रजाः' पुत्रादिकाः 'विन्देत्' लभेत, प्राप्नुयात् । "यो ऽनड्वान् विमुक्त- स्तच्छालासदां प्रजानां रूपं, यो युक्तस्तच्चक्रियाणां, ते ये युक्ते ऽन्ये विमुक्ते ऽन्य उपावहरन्त्युभावेव ते क्षेमयोगौ कल्पयन्ति"— इति। 'यः अनड्वान् विमुक्तः', 'तत्' एतत् 'शालासदां' गृहावस्थि- तानां 'प्रजानां' पुत्रादीनां 'रूपम्' ; 'यः' अनड्वान् अधस्ताच्छकटे 'युक्तः', 'तत्' 'च' 'क्रियाणां' लौकिकानां वैदिकानां च स्वरूपम्। यद्वा, चक्र मस्यास्तीति चक्रि शकटम्, तेन चक्रिणा यान्तीति, शकट मारुह्य गच्छन्तः प्रजाः चक्रियाः, तासां रूपम्। एवं सति 'ते' यजमानानां मध्ये 'ये' केचिद् बुद्धिमन्तो यजमानाः 'अन्ये युक्ते' एकस्मिन्ननडुहि शकटबद्धे, 'अन्ये विमुक्ते' इतरस्मिन्ननडुहि शक- टाद्वियोजिते सति सोमम् 'उपावहरन्ति'। 'ते' बुद्धिमन्तः 'उभावेव' क्षेमं योगं च सम्पादयन्ति । त मिम मर्थं तैत्तिरीया आमनन्ति— "यदुभौ विमुच्यातिथ्यं गृह्णीयाद्यज्ञं विच्छिन्द्याद्यदुभावविमुच्य यथानागतायातिथ्यं क्रियते तादृगेव तद्विमुक्तोऽन्योऽनड्वान् भवत्य- विमुक्तोऽन्योऽथातिथ्यं गृह्णाति यज्ञस्य सन्तत्यै"-इति ( सं० ६. २. १. १. ) । नन्वेकत्र सोमावरोहणकाल उच्यते, इतरत्राति- थेरिष्टिकाल इति न समानविषयत्वम् ? इति चेत्, न ; उभयो- रेककालीनत्वात् ॥

अथाख्यायिकामुखेन सोमोपावहरणस्यैशानीं दिशं विधत्ते— "देवासुरा वा एषु लोकेषु समयतन्त ; त एतस्यां प्राच्यां दिश्य-

यतन्त, तांस्ततो ऽसुरा अजयंस्ते दक्षिणस्यां दिश्ययतन्त, तांस्ततो ऽसुरा अजयंस्ते प्रतीच्यां दिश्ययतन्त, तांस्ततो ऽसुरा अजयंस्त उदीच्यां दिश्ययतन्त, तांस्ततो ऽसुरा अजयंस्त उदीच्यां प्राच्यां दिश्ययतन्त; ते ततो न पराजयन्त; सैषा दिगपराजिता; तस्मादेतस्यां दिशि यतेत वा यातयेदीश्वरो हानृणा कर्त्तोः"–इति। 'समयतन्त' सङ्ग्राम मकुर्वन्। प्राच्यादिषु चतसृषु दिक्षु देवानां पराजय आसीत्, ऐशान्यां दिशि नास्ति पराजयः; तस्मात्तस्यां 'दिशि' सोमोपावहरणाय 'यतेत' प्रयत्नं कुर्याद् 'वा', 'यातयेत्' प्रयत्नं कारयेद् 'वा'। एव मेव वैकल्यराहित्यं कर्तुं प्रभुर्भवति। अथवा सोमस्य राज्ञो विजयित्वेनोत्तरत्र प्रशंसां कर्तुं देवासुरा वा इत्यादिना लौकिकस्य राज्ञ ऐशान्यां दिशि स्वकीय-भृत्यप्रेरणं प्रतिपादितम् ॥

इदानीं सोमस्य जयहेतुत्वं दर्शयति—"ते देवा अब्रुवन्न-राजतया वै नो जयन्ति, राजानं करवामहा इति; तथेति; ते सोमं राजान मकुर्वंस्ते सोमेन राज्ञा सर्वा दिशो जयन्नेष वै सोम-राजा, यो यजते, प्राचि तिष्ठन्त्यादधति; तेन प्राचीं दिशं जयति; तं दक्षिणा परिवहन्ति, तेन दक्षिणां दिशं जयति; तं प्रत्यञ्च मावर्तयन्ति, तेन प्रतीचीं दिशं जयति; त मुदीचस्तिष्ठत उपा-वहरन्ति, तेनोदीचीं दिशं जयति; सोमेन राज्ञा"–इति। 'ते देवाः' परस्पर मेवम् 'अब्रुवन्'— अस्माकं राजाभावात् प्राच्यादि-दिक्षु पराजय आसीत्, असुराणां जय आसीत्,; ततो 'राजानं' सम्पादयामः 'इति' विचार्य 'सोमम्' एव 'राजानं' कृत्वा प्राच्यादि-दिक्षु जयम् प्राप्ताः। एवं सति 'यः' यजमानः सोमयागं करोति, 'एषः' एव। सोमो राजा यस्येति बहुव्रीहिः। अतः सोमाख्यस्वामिनः

प्रसादादयं यजमानः सर्वत्र 'जयति'। तत्कथ मिति चेत्, तदुच्यते —सोमवाहनार्थे शकटे 'प्राचि तिष्ठति' प्राङ्मुखेऽवस्थिते सत्यृत्विजस्तत्र सोमम् 'आदधति' प्रक्षिपन्ति, 'तेन' सोमसम्बन्धिशकटस्य प्राङ्मुखत्वेन यजमानः प्राच्यां दिशि जयं प्राप्नोति। शकटस्थितं सोमं 'दक्षिणा परिवहन्ति' शकटं दक्षिणाभिमुखत्वेन पर्यावृत्य वहन्ति, तेन दक्षिणस्यां दिशि जयः। ततः शकटं प्रत्यङ्मुखम् 'आवर्त्तयन्ति', 'तेन' प्रतीच्यां दिशि जयः। 'उदीचस्तिष्ठतः' उदङ्मुखेनावस्थितात् शकटात् 'तं' सोमम् 'उपावहरन्ति', 'तेन' उदङ्मुखत्वेन उदीच्यां दिशि जयः। एवं सोमराजप्रसादात् यजमानः सर्वा दिशो जयति। अस्मार्थवादेन विधेया उन्नेयाः *; —प्राङ्मुखे शकटे सोम मादध्युः, ततो दक्षिणाभिमुखत्वेन परिवहेयुः, ततः प्रत्यङ्मुखत्वेनावर्त्तयेयुः, तत उदङ्मुखात् शकटात् सोम मुपावहरेयुरिति॥ एतत् सर्व मभिप्रेत्यापस्तम्बः सङ्ग्रयाह— "प्रच्यवस्व भुवस्पत इति प्राञ्चो ऽभिप्रयाय प्रदक्षिण मावर्तन्ते"—इति ०—० "यथेत प्राग्वंशं प्रागीष मुदगीषं वा शकट मवस्थाप्य"—इति (१०. २९. १—११.)। वेदनं प्रशंसति—"सर्वा दिशो जयति य एवं वेद"—इति। अध्यशब्दादेकश्रुतस्यापि 'सर्वा दिशो जयति'—इतिवाक्यस्य द्विरावृत्तिः कर्तव्या॥ ३॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां तृतीयाध्याये
तृतीयः खण्डः॥ ३ (१४)॥

---

* विधेयाश्चिह चत्वारः; त एव प्रदर्श्यन्ते प्राङ्मुख इत्यादिना।

व्यूढे द्वादशाहे प्रथमदशद्वादशदिनव्यतिरिक्तो यो नवरात्र-स्तत्र ये त्र्यस्त्र्यहाः पूर्वं सुक्ताः (१७०पृ०), तान् प्रशंसति—"ऊर्ध्वो वै प्रथमस्त्र्यहस्तिर्यङ् मध्यमो ऽर्वाङुत्तमः ; स यदूर्ध्वः प्रथमस्त्र्यह-स्तस्मादय मग्निरूर्ध्व उद्दीप्यत,—ऊर्ध्वा ह्येतस्य दिग् ; यत्तिर्यङ् मध्यमस्तस्मादयं वायुस्तिर्यङ् पवते,— तिरश्चिरापो वहन्ति ; तिरश्ची ह्येतस्य दिग् ; यदर्वाङुत्तमस्तस्मादसावर्वाङ् तपत्यर्वाङ् वर्षत्यर्वाञ्चि नक्षत्राण्यर्वाची ह्येतस्य दिक् ; सम्यञ्चो वा इमे लोकाः, सम्यञ्च एते त्र्यहाः"-इति। योऽयं नवरात्रे प्रथमस्त्र्यहः, सोऽयम् 'ऊर्ध्वो वै' आरोहप्रकार एव। तद्यथा— गायत्रं प्रात-स्सवनं, त्रैष्टुभं माध्यन्दिनसवनं, जागतं तृतीयसवन मित्ययं स्वभाव-सिद्धः क्रमः ; तस्य व्यत्यासभावादूर्ध्व इत्युच्यते। यस्तु मध्यमस्त्र्यहः, सोऽयं 'तिर्य्यङ्' वर्त्तते। तद्यथा— जागतं प्रातस्सवनं, गायत्रं माध्यन्दिनं, त्रैष्टुभं तृतीय मित्यत्र नात्यन्त मनुक्रमो नाप्यत्यन्तं व्युत्क्रमः ; तस्मादयं तिर्य्यङ्। य उत्तमस्त्र्यहः, 'सः' 'अर्वाङ्' अधो-मुखः। तद्यथा – त्रैष्टुभं प्रातस्सवनं, जागतं माध्यन्दिनं, गायत्रं तृतीयसवन मित्येतदर्वाक्त्वम्। प्रथमो जागतान्तो द्वितीय-स्त्रैष्टुभान्तस्तृतीयो गायत्रान्त इत्येवम् ऊर्ध्वतिर्यक्त्वार्वाक्त्वानि त्रिष्वपि त्र्यहेषु द्रष्टव्यानि। यस्मात् 'सः' प्रथमस्त्र्यह ऊर्ध्वस्तस्मात्तदात्म-कोऽय मग्निरूर्ध्वाभिमुखो दीप्यते। 'एतस्य' चाग्नेः ऊर्ध्वा दिक् प्रिया। मध्यमस्य त्र्यहस्य तिर्यक्त्वात् तद्रूपो वायुस्तिर्यङ् वर्त्तते,— वायुना हि प्रेरिता आपः 'तिरश्चिरपः' तिर्यग्भूताः प्रवहन्ति। 'एतस्य' वायोस्तिर्यक्त्वात् तिरश्ची दिक् प्रिया। उत्त-मस्य त्र्यहस्यार्वाक्त्वात्तद्रूपः 'असौ' आदित्योऽधोमुखस्तपति,— आदित्यप्रेरितः पर्जन्योऽधोमुखो वर्षति,— आदित्यवन्नक्षत्राण्यपि

'अर्वाञ्चि' अधोमुखानि प्रकाशन्ते । 'एतस्य' आदित्यस्य अर्वाची दिक् प्रिया । किञ्च इमे त्रयो लोकास्तत्तद्वासिनां सुखहेतुत्वात् 'सम्यञ्चः'; एते च मासाः लोकत्रयसाम्येनानुष्ठातॄणां सुख-हेतुत्वात् सम्यञ्चः ॥ वेदनं प्रशंसति— "सम्यञ्चोऽस्मा इमे लोकाः श्रियै दीद्यति य एवं वेद"-इति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां चतुर्थाध्याये (एकोनविंशाध्याये) तृतीयः खण्डः ॥ ३ ( २५ ) ॥

---

॥ अथ चतुर्थः खण्डः ॥

दीक्षा वै देवेभ्यो ऽपाक्रामत् तां वासन्तिकाभ्यां मासाभ्या मन्वयुञ्जत तां वासन्तिकाभ्यां मासाभ्यां नोदाप्नुवंस्तां ग्रैष्माभ्यां तां वार्षिकाभ्यां तां शारदाभ्यां तां हैमन्तिकाभ्यां मासाभ्या मन्वयुञ्जत तां हैमन्तिकाभ्यां मासाभ्यां नोदाप्नुवंस्तां शैशिराभ्यां मासाभ्या मन्वयुञ्जत तां शैशिराभ्यां मासाभ्या माप्नु-वन्नाप्नोति य मीप्सति नैनं द्विषन्नाप्नोति य एवं वेद तस्माद्यं सविया दीक्षोपनमेदेतयोरेव शैशिरयो-

मासयोरागतयोर्दीक्षेत साक्षादेव तद्दीक्षाया मागतायां दीक्षते प्रत्यक्षाद्दीक्षां परिगृह्णाति तस्मादेतयोरेव शैशिरयोर्मासयोरागतयोर्ये चैव ग्राम्याः पशवो ये चारण्या अणिमाण मेव तत्परुषिमाणं नियन्ति दीक्षारूप मेव तदुप निष्प्लवन्ते स पुरस्ताद्दीक्षायाः प्राजापत्यं पशु मालभेत तस्य सप्तदश सामिधेनीरनुब्रूयात् सप्तदशो वै प्रजापतिः प्रजापतेराप्त्यै तस्याप्रियो जामदग्न्यो भवन्ति तदाहुर्यदन्येषु पशुषु यथर्च्याप्रियो भवन्त्यथ कस्मादस्मिन्त्सर्वेषां जामदग्न्य एवेति सर्वरूपा वै जामदग्न्यः सर्वसमृद्धाः सर्वरूप एष पशुः सर्वसमृद्धस्तद्यज्जामदग्न्यो भवन्ति सर्वरूपतायै सर्वसमृद्ध्यै तस्य वायव्यः पशुपुरोळाशो भवति तदाहुर्यदन्यदेवत्य उत पशुर्भवत्यथ कस्माद्वायव्यः पशुपुरोळाशः क्रियत इति प्रजापतिर्वै यज्ञो यज्ञस्यायातयामताया इति ब्रूयाद्यद्वु वायव्येन प्रजापतेर्नैति वायुर्ह्येव प्रजापतिस्तदुक्तमृषिणा पवमानः प्रजापतिरिति सत्र मु चेत्स न्युप्याग्नीन् यजेरन्त्सर्वे दीक्षेरन्त्सर्वे सुनुयुर्वसन्त मभ्युदवस्यन्त्यूर्ग् वै वसन्त इष मेव तदूर्ज मभ्युदवस्यति ॥ ४ ( २६ ) ॥

अथ द्वादशाहे दीक्षायाः कालविशेषं विधातुं प्रस्तौति—“दीक्षा वै देवेभ्यो ऽपाक्रामत् ; तां वासन्तिकाभ्यां मासाभ्या मन्वयुञ्जत, तां वासन्तिकाभ्यां मासाभ्यां नोदाप्नुवंस्तां ग्रैष्माभ्यां तां वार्षिकाभ्यां तां शारदाभ्यां तां हैमन्तिकाभ्यां मासाभ्या मन्वयुञ्जत, तां हैमन्तिकाभ्यां मासाभ्यां नोदाप्नुवंस्तां शैशिराभ्यां मासाभ्या मन्वयुञ्जत, तां शैशिराभ्यां मासाभ्या माप्नुवन्”—इति । पुरा कदाचित् ‘दीक्षा’ स्त्रीमूर्त्तिरूपा सती देवेभ्यपरक्ता, तेभ्यो देवेभ्यो निर्गता । देवाश्च ‘वासन्तिकाभ्यां’ चैत्रवैशाख-मासाभ्यां ‘तां’ दीक्षाम् ‘अनु’गम्य ‘अयुञ्जत’ तद्युक्ता भवाम इत्येव मपेक्षितवन्तः । ततस्त्वरया गच्छतीति ‘तां’ दीक्षां ताभ्यां मासाभ्यां मुक्तायैव ‘न आप्नुवन्’ नाशक्नुवन् । एवं ग्रैष्म-वार्षिक-शारदेषु मासेषु यथायोगं पदान्यध्याहृत्य व्याख्येयम् । अध्या-हारविवक्षां दर्शयितु मेव हैमन्तिके पर्य्याये सम्पूर्णं वाक्य माम्ना-तम् । यथोक्तपञ्चर्त्तुगतैर्मासैस्तत्प्राप्त्यभावेऽपि शैशिरमासाभ्यां तत्प्राप्तिर्जाता ॥ वेदनं प्रशंसति—“आप्नोति य मीप्सति ; नैनं द्विषन्नाप्नोति य एवं वेद”—इति । वेदिता पुरुषः ‘यं’ काम मासु मिच्छति, त माप्नोति ; किञ्च ‘एनं’ वेदितारं ‘द्विषन्’ वैरी न प्राप्नोति ॥

इदानीं कालं विधत्ते—“तस्माद्य’ सत्रिया दीक्षोपनमेदेतयो-रेव शैशिरयोर्मासयोरागतयोर्दीक्षेत ; साक्षादेव तद्दीक्षाया माग-तायां दीक्षते,— प्रत्यक्षाद्दीक्षां परिगृह्णाति ; तस्मादेतयोरेव शैशिरयोर्मासयोरागतयोर्ये चैव ग्राम्याः पशवो ये चारण्या अणि-मान मेव तत्परिमाणं नियन्ति, दीक्षारूप मेव तदुप निप्र-वन्ते”—इति । यस्मात् शैशिराभ्यां मासाभ्यां देवानां दीक्षाप्राप्तिः,

'तस्माद्' 'यं' पुरुषं द्वादशाहादिसत्त्रसम्बन्धिनी दीक्षा प्राप्नुयात्, दीक्षां तत्र करिष्यामीति * यस्येच्छा जायते, स पुमान् 'एतयोरेव' शिशिरसम्बन्धि-माघफाल्गुनयोर्मासयोः प्राप्तयोः सतोः दीक्षां कुर्य्यात्। तथा सति दीक्षायां साक्षादेवागतायां बलात्कार मन्तरेण स्वप्रिये काले स्वय मेव 'समागतायां' सत्या मयं दीक्षितो भवति। अतः 'प्रत्यक्षात्' प्रत्यक्षेण दृश्यमाना मिव मुख्यां दीक्षां परिगृह्णाति। यस्मादुक्तमासद्वयागमे दीक्षा, 'तस्मात्' तयोर्मासयोरागतयोः सतोः 'ग्राम्याः' गवादिपशवः, 'आरण्याः' द्विकारादिपशवश्च 'अणिमाणं' कृशत्वं 'परुषिमाणं' पारुष्यं च 'नियन्ति' नितरां प्राप्नुवन्ति। वर्षाशरद्धेमन्तेषु ऋतुषु सन्तापराहित्यात्सर्वत्र हरिततृणं भक्षयित्वा पशवः पुष्टाङ्गाः स्निग्धाश्चावभासन्ते; शैशिरे तु ऋतौ तृणस्य शोषणोपक्रमात्सम्पूर्णभक्षणाभावेन पशवः कृशा भवन्ति; अतएवास्थिदर्शनात् परुषा दृश्यन्ते। एतच्च युक्त मेव। 'तत्' तस्मिन् शिशिरर्त्तौ दीक्षारूप मेवोपेत्य नितरां 'प्लवन्ते' सञ्चरन्ति। दीक्षितो नियमविशेषैः पीडितः कृशः परुषश्च भवति, अतः पशूनां कृशत्वं पारुष्यञ्च दीक्षाकाललिङ्गम् ॥

दीक्षार्थिनः कञ्चित्पशुं विधत्ते—"स पुरस्ताद्दीक्षायाः प्राजापत्यं पशु मालभते"—इति। यो दीक्षां वाञ्छति, 'सः' पुमान् दीक्षोपक्रमात् पुरा प्रजापतिदेवताकं पशु मालभेत †। द्विविधो हि

* "गमिष्यामीति" ग।

† "अथ सप्तदश प्राजापत्यान् पशूनालभते। ते वै सर्वे तूपरा भवन्ति, सर्वे श्यामाः, सर्वे मुष्कराः ०—०तूपरो ऽविषाणः०—०द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च०—० प्रजननं वै मुष्कर:"—इत्यादि शत० ब्रा० ५.१.३.७–१०। "प्राजापत्यो वा अश्वः"—इति च शत० ब्रा० ६.५.३.९; तै० ब्रा० २.७.१.३; म० सं० ११.३८। वा० सं० २४ अ०।

द्वादशाहः,— साग्निचित्यो निरग्निचित्यश्च *; तत्राग्निचयनयुक्ते पशुरयं मन्तव्यः ॥

सामिधेनीषु चोदकप्राप्तं † पाञ्चदश्य मपवदितुं विशेषं विधत्ते— "तस्य सप्तदश सामिधेनीरनुब्रूयात्,— सप्तदशो वै प्रजापतिः; प्रजापतेराप्त्यै"–इति। इयोर्धाय्ययोः ‡ प्रक्षेपेण सप्तदशसङ्ख्या सम्पद्यते। सप्तदशत्वं "द्वादशमासाः"–इत्यादिना पूर्व मेवोक्तम् (१भा०१३पृ०)। अतः सप्तदशसङ्ख्या प्रजापतेः प्राप्तिः सम्पद्यते ॥

आप्रीयाज्यासु विशेषं विधत्ते— "तस्याप्रियो जामदग्न्यो भवन्ति"–इति। पशोः प्राप्तिहेतुत्वात्प्रयाजा आप्रिया इत्युच्यन्ते §। तदत्र जमदग्निना दृष्टाः "समिद्धो अद्य मनुषः"–इत्यादिसूक्ते समाम्नाताः ( सं० १०.११०.१–११. ) द्रष्टव्याः ‖ ॥

अत्र चोद्य मुद्भावयति —"तदाहुर्यदन्येषु पशुषु यथऋष्याप्रियो भवन्त्यथ कस्मादस्मिन्त्सर्वेषां जामदग्न्य एवेति"–इति। उक्त-प्राजापत्यपशुव्यतिरिक्तेषु सर्वेषु पशुषु 'आप्रियो यथऋषि भवन्ति' यस्य यजमानस्य गोत्रप्रवर्त्तको य ऋषिर्भवति, त मनतिक्रम्य तेन दृष्टा एवाप्रियो भवन्ति। एवं सत्यत्रापि जमदग्निगोत्र-जाना मेव "समिद्धो अद्य"–इत्याप्रियो ऋचो युक्ताः, न त्वन्येषाम्। अथैवं सति 'कस्मात्' कारणात् 'अस्मिन्' पशौ 'सर्वेषां' जमदग्नि-गोत्रजाना मन्येषां चैता एवाप्रियः क्रियन्ते ? इति चोद्यम् ॥

---

* "साग्निचित्यावग्नेष्टोमौ सर्वजिद्द्वीची"–इति कात्या० श्रौ० २२.१०.३२। "सर्वजित् च महाव्रतः संवत्सरदीक्षः"–इत्यादि च १.४४। आश्व० श्रौ० ४.१.२१ ; ८.२७ ; १०.१०।

†, ‡ १भा० २३पृ० *—‖ टीप्पन्यो द्रष्टव्याः।

§ १भा० २६०,२६१पृ०, * टीप्पनी च द्रष्टव्या।

‖ निरु० ८. २. २—८. ३. ६. द्रष्टव्याः।

तस्योत्तर माह—"सर्वरूपा वै जामदग्न्यः सर्वसमृद्धाः सर्वरूप एष पशुः सर्वसमृद्धस्तद्यज्जामदग्न्यो भवन्ति सर्वरूपतायै सर्वसमृद्धै"—इति। जमदग्निना दृष्टा ऋचः 'सर्वरूपा वै' सर्वासा मृचां स्वरूपभूता एव, 'सर्वसमृद्धाः' सर्वसमृद्धिफलहेतुत्वात्। 'एषः' प्रजापतिदेवताकः पशुरपि 'सर्वरूपः' प्रजापतेः सर्वदेवतात्मकत्वेन तदीयपशोरपि सर्वपश्वात्मकत्वम्; अतोऽयं पशुरपि सर्वफलसमृद्धिहेतुत्वात् सर्वैः फलैः समृद्धः। 'तत्' तथा सति यज्जामदग्न्यानामनुष्ठानं, तत्सर्वानुष्ठानसिद्धार्थं सर्वफलसमृद्धार्थं च भवति॥

पश्वङ्गे पशुपुरोडाशे विशेषं विधत्ते—"तस्य वायव्यः पशुपुरोळाशो भवति"—इति। 'तस्य' प्राजापत्यस्य पशोः। वायुर्देवता यस्य पुरोडाशस्य सोऽयं 'वायव्यः'॥

अत्र चोद्य मुद्भावयति—"तदाहुर्यदन्यदेवत्य उत पशुर्भवत्यथ कस्माद्वायव्यः पशुपुरोळाशः क्रियत इति"—इति। 'यद्' यस्मात्कारणात् 'अन्यदेवत्य उत' वायुव्यतिरिक्त-प्रजापतिदेवताक एवायं पशुर्भवति, तस्मात् पुरोडाशोऽपि प्रजापतिदेवताक एव युक्तः; "यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः"—इत्यभिधानात्। अथैवं सति प्रजापतिं परित्यज्य 'कस्मात्' कारणात् पुरोडाशो वायुदेवताकः क्रियते? इति चोद्यम्॥

तस्योत्तर माह—"प्रजापतिर्वै यज्ञो, यज्ञस्यायातयामताया इति ब्रूयाद्; यदु वायव्यस्तेन प्रजापतेर्नैति; वायुर्ह्येव प्रजापतिः" —इति। पशुरूपस्य यज्ञस्य प्रजापतिदेवातात्मकत्वेन प्रजापतिरूपत्वम्; तादृशस्यास्य यज्ञस्य पशुर्हविषि पुरोडाशे तद्देवतैक्ये सति 'यातयामत्वम्' असारत्व मालस्यकारणं भवेत्,—सति हि भेदे भिन्नदेवताकं कर्म आलस्यरहितं भवति; तस्माद् 'अयातयाम-

वायै' निस्सारत्वरूपाक्षेपपरिहाराय देवतान्तरं युक्तम् 'इति' उत्तरं ब्रूयात् । न च वायुदेवताकत्वे प्रजापतेः सकाशात्पुरोडाशोऽपगच्छतीति शङ्कनीयम् ; वायुप्रजापत्योः कार्य्यकारणाभावेनैकत्वे सति वायव्यस्यैव प्राजापत्यत्वात् । तदिद मुच्यते—'यद्‌ु वायव्यस्तेन प्रजापतेर्नैति"–इति । नापगच्छतीत्यर्थः ॥

वायुप्रजापत्योरेकत्वं मन्त्रसंवादेन द्रढयति—"तदुक्त मृषिणा —पवमानः प्रजापतिरिति"–इति । "त्वष्टार मग्रजां गोपाम्"–इत्यस्या ऋचः चतुर्थपादे यः 'पवमानः' वायुः, स प्रजापतिरिति तादात्म्यं सामानाधिकरण्येन दर्शितम् * ॥

पूर्वं भरतद्वादशाहो व्यूढद्वादशाहश्चेति द्वौ भेदावुक्तौ ; प्रकारान्तरेणापि सत्ररूपो ऽहीनरूपश्चेत्येवं द्विविधो द्वादशाहः । तत्र सत्रपक्षे विशेषान्विधत्ते—"सत्र मु चेत्सं न्युप्याग्नीन्यजेरन्त्सर्वे दीक्षेरन्त्सर्वे सुनुयुर्वसन्त मभ्युदवस्यतूर्ग्ं वै वसन्त इष मेव तदूर्ज मभ्युदवस्यति"–इति । 'सत्र मु चेत्' यद्ययं द्वादशाहः सत्ररूपो भवेत्, तदानीं सत्रस्य बहुयजमानत्वात्सर्वेषां यजमानाना मग्नीन् 'सम्युप्य' सम्भूयैकत्वेनावस्थाप्य, तस्मिन् सर्वे यजेरन् ; यजमानत्वादेव सर्वेऽपि 'दीक्षेरन्' दीक्षां कुर्य्युः । "य एव यजमानास्त एव ऋत्विजः"–इत्युक्तत्वेन 'सर्वे' यजमानाः 'सुनुयुः' ऋत्विक्कार्य्य मभिषवं कुर्य्युः । वसन्तर्त्तु मभिलक्ष्य 'उदवस्यति' उदवसानीयां समाप्तिकालीना मिष्टि मनुतिष्ठेत्, वसन्तर्त्तौ समापयेदित्यर्थः । वसन्तकाले सति फलानां वृक्षेष्वागमनेन रसबाहुल्यात् 'ऊर्ग्ं वै' रस एव वसन्तः । तथा सत्येतस्मिन्नेतत्समापनेन 'इषम्' अन्नम्,

---

* "त्वष्टार मग्रजां गोपां पुरोयावान मा हुवे । इन्दुरिन्द्रो वृषा हरिः पवमानः प्रजापतिः ॥"—इति सं॰ ९. ५. ९ ।

'ऊर्जं' रसं वाभिलक्ष्य 'उदवस्यति' यजमानस्तो द्वादशाहं समापयति ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां चतुर्थाध्याये (एकोनविंशाध्याये) चतुर्थः खण्डः ॥ ४ (२६) ॥

---

## ॥ अथ पञ्चमः खण्डः ॥

छन्दांसि वा अन्योन्यस्यायतन मभ्यध्यायन् गायत्री त्रिष्टुभश्च जगत्यै चायतन मभ्यध्यायत् त्रिष्टुब् गायत्र्यै च जगत्यै च जगती गायत्र्यै च त्रिष्टुभश्च ततो वा एतं प्रजापतिर्व्यूळ्हच्छन्दसं द्वादशाह मपश्यत्त माहरत्तेनायजत तेन स सर्वान्कामांश्छन्दांस्यगमयत्सर्वान् कामान् गच्छति य एवं वेद छन्दांसि व्यूहत्ययातयामतायै छन्दांस्येव व्यूहति तद्यथादो ऽश्वैर्वानड्डुद्भिर्वान्यैरन्यैरश्रान्ततरैरश्रान्ततरैरुपविमोकं यान्त्येव मेवैतच्छन्दोभिरन्यैरन्यैरश्रान्ततरैरश्रान्ततरै रुपविमोकं स्वर्गं लोकं यन्ति यच्छन्दांसि व्यूहतीमौ वै लोकौ सहास्तां तौ व्यैतां नावर्षन्न समतपत्ते पञ्चजना न समजानत तौ देवाः समनयंस्तौ संयन्तावेतं

देवविशाहं व्यवहेतां रथन्तरेणैवेय ममं जिन्वति बृहतासाविमां नौधसेनैवेय ममं जिन्वति श्यैतेनासाविमां धूमेनैवेय ममं जिन्वति वृष्ट्यासाविमां देवयजन मेवेय ममुष्या मदधात्पशूनसावस्यां मेतद्वा इय ममुष्यां देवयजन मदधाद्यदेतच्चन्द्रमसि कृष्ण मिव तस्मादापूर्यमाणपक्षेषु यजन्त एतद्देवोपेप्सन्त ऊषानसावस्यां तद्धापि तुरः कावषेय उवाचोषः पोषो जनमेजयकेति तस्माद्धाप्येतर्हि गव्यं मीमांसमानाः पृच्छन्ति सन्ति तत्रोषा३ः इति ऊषो हि पोषोऽसौ वै लोक इमं लोक मभिपर्यावर्त्तत ततो वै द्यावापृथिवी अभवतां न द्यावान्तरिक्षान्नान्तरिक्षाद्भूमिः ॥ ५ ( २७ ) ॥

अथ व्यूढद्वादशाहे यदेतद् व्यूढत्वम्, तदेतत् प्रशंसितु माख्यायिका माह— "छन्दांसि वा अन्योन्यस्यायतन मभ्यध्यायन्,— गायत्री त्रिष्टुभश्च जगत्यै चायतन मभ्यध्यायत्, त्रिष्टुब् गायत्र्यै च जगत्यै च, जगती गायत्र्यै च त्रिष्टुभश्च ; ततो वा एतं प्रजापतिर्व्यूळ्हच्छन्दसं द्वादशाह मपश्यत्, त माहरत्, तेनायजत ; तेन स सर्वान् कामांश्छन्दांस्यगमयत्"–इति । गायत्री त्रिष्टुप् जगतीत्येतानि त्रीणि छन्दांसि, अन्योन्यस्यायतनम् 'अभि' आप्तुम् 'अध्यायन्' स्वस्वमनस्यचिन्तयन् । तेषां च त्रयाणां छन्दसां क्रमेण सवनत्रयं स्थानम् । तत्र गायत्री त्रिष्टुब्जगत्योः स्थाने माध्यन्दिन-

सवनद्वतीयसवने ध्यातवती ; त्रिष्टुप् स्वस्थानव्यतिरिक्तं स्थानद्वय मभ्यध्यायत् ; तथा जगत्यपि। 'ततः' प्रजापतिश्छन्दसा मभिलाषं दृष्ट्वा, तत्सम्पादनक्रमेण 'एतं व्यूळ्हच्छन्दसं द्वादशाहम् अपश्यत्'। स्वस्वस्थानविपरीतत्वेनोढानि स्थानान्तरे प्रक्षिप्तानि छन्दांसि यस्मिन् द्वादशाहे, सोऽयं 'व्यूळ्हच्छन्दाः'। तादृशं द्वादशाहं दृष्ट्वा, तत्साधनान्याहृत्य, तेनेष्ट्वा, 'सः' प्रजापतिस्तेषा मपेक्षितान् स्थानविपर्यासलक्षणान् 'सर्वान् कामान्' गायत्र्यादिच्छन्दांसि प्रापितवान् ॥ वेदनं प्रशंसति—"सर्वान् कामान् गच्छति य एवं वेद"-इति ॥

इदानीं व्यूहनं विधत्ते—"छन्दांसि व्यूहत्ययातयामतायै"-इति। 'छन्दांसि' गायत्र्यादीनि 'व्यूहति' तत्तदायतनविपर्यासेन अवस्थापयेत्। तच्च व्यूहनम् 'अयातयामतायै' असारत्वप्रयुक्तकालस्य परिहाराय भवति ॥

उक्तव्यूहन मनूद्य प्रशंसति—"छन्दांस्येव व्यूहति ; तद्यथादोऽश्वैर्वानड्‌द्भिर्वान्यैरन्यैरश्रान्ततरैरश्रान्ततरैरुपविमोकं यान्त्येव मेवैतच्छन्दोभिरन्यैरन्यैरश्रान्ततरैरश्रान्ततरैरुपविमोकं स्वर्गं लोकं यन्ति, यच्छन्दांसि व्यूहति"-इति। 'छन्दांसि' गायत्र्यादीनि अस्मिन् द्वादशाहविशेषे 'व्यूहत्येव' न तत्र सन्देहः कार्य्यः। 'तत्' तस्मिन् व्यूहने 'यथा' लोके 'अदः' निदर्शनम्। किं निदर्शनम्? इति, तदुच्यते—ये राजानो रथ मारुह्य तत्रत्यैरश्वैर्दूरदेशं गच्छन्ति, ते राजानो योजने योजने 'उपविमोकं' श्रान्तानश्वान् उपविमुच्योपविमुच्य, 'अन्यैरन्यैः' पुनःपुनर्नूतनैर्दूरदेशं यान्ति। तत्रोपपत्तिः 'अश्रान्ततरैः'-इति, अतिशयेन श्रमरहितैः। पौनःपुन्यं द्योतयितुं वाक्याहृत्तिः। लाङ्गले शटीयन्त्रे वा तदा तदा

श्रान्तानश्रान्तनडुहो वा विमुच्य-विमुच्य, नूतनैरनडुद्भिः प्रवर्त्तते । एव मेवात्रापि छन्दसां स्थानविपर्यासे सति स्वस्थाने श्रान्तानि छन्दांसि पुनःपुनरुपविमुच्य, तदा तदा नूतनैः छन्दोभिः सचिवः स्वर्गं लोकं गच्छन्ति । यदा छन्दांसि व्यूहति, तदानी मत्यन्तं तद्दिति द्रष्टव्यम् ॥

अथ दृष्टद्रथन्तरसामनी उपाख्यानेन प्रशंसति—"इमौ वै लोकौ सहास्तां ; तौ व्यैतां, नावर्षन्न समतपत् ; ते पञ्चजना न समजानत ; तौ देवाः समनयंस्तौ संयन्तावेतं देवविवाहं व्यवहेतां ; रथन्तरेणैवेय ममूं जिन्वति, बृहतासाविमाम्"—इति । 'इमौ' भूलोकस्वर्गलोकौ पूर्वस्मिन्काले 'सहैवास्ताम्' अत्यन्तं प्रीतियुक्तावेकत्रैवावस्थितौ । कदाचित्तावुभौ केनापि निमित्तेन 'व्यैतां' वियोगं प्राप्तवन्तौ, परस्परविरोधेन सहवासं परित्यज्य दूरदेशेऽवस्थितौ । तदानीं द्युलोकात् निर्वृत्तः पर्जन्यो 'नावर्षत्' वृष्टिं न सम्पादितवान् ; आदित्यश्च द्युलोकवर्त्ती 'न समतपत्' आतपरूपं प्रकाशं न कृतवान् । तदानीं 'ते पञ्चजनाः' पूर्वोक्ताः * देवमनुष्यादयः पञ्चविधाः प्राणिनः 'न समजानत' अन्धकारग्रस्ताः सन्तः क मपि मार्गं मज्ञात्वा परस्परैकमत्यरहिता अभवन् । तदानीं तादृशान् प्राणिनो दृष्ट्वा 'तौ' उभौ लोकौ 'समनयन्' परस्परं सङ्गतिं प्रापितवन्तः । 'तौ' उभौ लोकौ 'संयन्तौ' परस्परं सङ्गमं प्राप्तवन्तौ । 'एतं' परोस्परोपकाररूपं 'देवविवाहं' देवाना मुचितं विवाहं 'व्यवहेतां' विविधत्वेन कृतवन्तौ । लोकेऽपि विवाहो नाम परस्परविपर्यासेन सम्बन्धप्रापणम् । तथाहि— वरस्य पिता स्वपुत्रं कन्यापितुर्जामातृत्वेन

* १४२, १४१ पृ०, तत्र टीप्पनी च द्रष्टव्या ।

सम्बन्धयति, कन्यापिता च स्वपुत्रीं वरयितुः स्नुषात्वेन सम्बन्धयति। तदिदं विपर्यासेन सम्बन्धनयनं 'विवाहः'। तयोश्च विवाहे परस्परं गृहभोजनं वस्त्रप्रदानाद्युपचारञ्च कुर्वन्ति। एवमेतौ लोकौ परस्पर मुपकुरुतः। तत्र 'इयं' भूमिः साम्ना 'रथन्तरेण' एतन्नामकेनेव 'अमूं' दिवं 'जिन्वति' प्रीणयति; 'असौ' द्यौश्च 'इमां' भूमिं 'बृहता' साम्ना जिन्वति। तत एव सर्वत्रेयं वै रथन्तर मसौ बृहदिति लोकद्वयरूपेण सामद्वयं स्तूयते॥

द्वादशाहे बृहद्रथन्तरयोरपेक्षितत्वेन प्रशंसां कृत्वा तत्प्रसङ्गाल्लोकद्वयस्यान्यानपि परस्परोपकारान् दर्शयति—"नौधसेनैवेय ममूं जिन्वति, श्यैतेनासाविमां; धूमेनैवेय ममूं जिन्वति, वृष्ट्यासाविमां; देवयजन मेवेय ममुष्या मदधात्, पशूनसावस्याम्"-इति। "इम मिन्द्र सुतं पिब"-इत्यस्या मृच्युत्पन्नं साम 'नौधसम्' *, "त्वा मिदा ह्यो नरः"-इत्यस्या मृच्युत्पन्नं साम 'श्यैतम्' †; ताभ्यां लोकयोः परस्परं प्रीतिः। भूमावग्निजन्यो धूमो दिवि गच्छति, द्युलोकात् समुत्पन्ना वृष्टिरुर्व्यां गच्छति; सोऽयं धूमवृष्टिभ्यां परस्परोपकारः। 'देवयजनं' देवयागयोग्यं किञ्चिद्देशम् 'इयं' भूमिः 'अमुष्यां' दिवि अदधात्, 'असौ' च द्यौः पशून् 'अस्यां' भूमावदधात्; अतो देवयजनपशुभ्यां परस्परोपकारः ‡ ॥

---

* छ० आ० ३. १. ५. ४ ऋचि गे० गा० ६. १. २७. नौधसं (योनिसाम); उ० आ० १. १. १३. १. २ ऋचोः प्रगाथतृचे ऊ० गा० १. १. ६. नौधसं (स्तोत्रम्)।

† "त्वामिदा" छ० आ० ४. १. १. १०. नात्र श्यैत मुपलभ्यते। "अभि प्र वः"-इति छ० आ० ३. १. ५. ३ ऋचि गे० गा० ६. १. ३२ श्यैतं (योनिसाम); उ० आ० २. १. ५. १३. २ ऋचोः प्रगाथतृचे ऊ० गा० २. १. ३. श्यैतं (स्तोत्रं)। मानं त्विह आ० ब्रा० १. २६। ता० ब्रा० ११. ८. ५. सा० भा० अपि द्रष्टव्यम्।

‡ साममाह्मणेऽपि एव मेव। ता० ब्रा० ७ १०, १–४; ११. ८५।

तत्र देवयजनशब्देन विवक्षित मर्थं व्याचष्टे— "एतद्वा इय
ममुष्यां देवयजन मदधाद्यदेतच्चन्द्रमसि कृष्ण मिव"-इति । चन्द्र-
मण्डले शशमृगादिशब्देन लोके व्यवह्रियमाणं यदेतत् 'कृष्ण मिव'
कृष्णवर्णं मिव रूपं दृश्यते, एतदेव 'देवयजनं' देवयागयोग्यं वस्तु,
'इयं' भूमिः 'अमुष्यां' दिवि स्थापितवती ॥

चन्द्रमसि कृष्णरूपप्रसङ्गाद्यागेषु मुख्यत्वेन शुक्लपक्षं विधत्ते—
"तस्मादापूर्यमाणपक्षेषु यजन्त एतदेवोपेप्सन्त"-इति । यस्मा-
द्यागयोग्यं कृष्णं चन्द्रमसि स्थितम्, 'तस्मात्' कारणात् शुक्लपक्षेषु
यागं कुर्वन्तो यजमानाः 'एतदेव' चन्द्रमण्डलम् उपाप्तु मिच्छन्ति ।
दिने दिने वर्धमानया कलया सर्वतः पूर्यमाणं चन्द्रमण्डलं येषु
शुक्लपक्षेषु, तेन ते 'आपूर्यमाणपक्षाः' । कर्मिणां दक्षिणमार्गेण
चन्द्रमण्डलप्राप्तिः सर्वासूपनिषत्सु प्रसिद्धा * ॥

देवयजनशब्दं व्याख्याय पशुशब्दं व्याचष्टे—"ऊषानशावस्तां;
तद्धापि तुरः कावषेय उवाचोषः पोषो जनमेजयकेति ; तस्मा-
द्धाप्येतर्हि गव्यं मीमांसमानाः पृच्छन्ति,— सन्ति तत्रोषा३ः
इति ; ऊषो हि पोषोऽसौ वै लोक इमं लोक मभि पर्य्यावर्त्तते"
-इति । 'असौ' द्युलोकः 'अस्यां' भूमौ 'ऊषान्' आदधातीत्यध्या-
हारः । देशान्तरप्रसिद्धि मुपजीव्य पशुशब्दस्योषशब्दो व्याख्या-
नम् । "वश कान्तौ"-इत्यस्माद्धातोरूषशब्दो निष्पन्नः । 'ऊषाः'
कमनीयाः ; पशूनां गवादीनां कमनीयत्वं प्रसिद्धम् । ऊष-
शब्दव्यवहार एव 'तद्धापि'-इत्यादिना प्रदर्श्यते । यस्मादूषः पशु-
रिति देशविशेषे पर्य्यायत्वेन प्रसिद्धौ, 'तद्धापि' तस्मादेव कार-
णात् तुरनामकः कश्चिन्महर्षिः कवषस्य पुत्रः, जनमेजयनामानं

* छा० उप० ५. १०. ४ ; बृ० उप० ५. १९ ; ६. २. १६ ।

राजानं सम्बोध्यैव मुवाच,— हे जनमेजयक! 'अष: पोष:' पोषशब्दाभिधेय:, पुष्टिहेतु: पशुरिति। यस्मात्तु अषशब्दं पशुषु व्याजहार, 'तस्माद्धि' तस्मादेव कारणादिदानी मपि 'गव्यं मीमांसमाना:' केचिद्देशविशेषेषु गोरसं क्षीरादिकं विचारयन्त एवं पृच्छन्ति,—'तत्र' तेषु देशेषु, 'किं भूषाः सन्ति?'–इति; गोविषय: प्रश्नस्तेषा मभिप्रेत:। प्रश्नार्था श्रुति:। यस्माद्भूषशब्द-वाच्य: पोषहेतुर्गवादिरूप: पशु:, तस्माद्भूषशब्देन पशुशब्दव्याख्यान मुचितम्। 'असौ' द्युलोक: 'इमं' भूलोक मभिलक्ष्य पर्य्यावर्त्तते, तेन पशुनोपकृतवानित्यर्थ: ॥

इत्थं बृहद्रथन्तरप्रसङ्गेन द्यावापृथिव्यो: परस्पर मुपकारम् बहुधा प्रपञ्च्योपसंहरति— "ततो वै द्यावापृथिवी अभवतां, न द्यावान्तरिक्षान्नान्तरिक्षाद्भूमि:"–इति। 'ततो वै' तस्मादेव पर-स्परोपकारकत्वकारणाद्, द्यावापृथिव्यौ वियुक्ते अपि परस्परैकम-त्येन प्राप्तुपकारिण्यावभवताम्। न च तत्रान्तरिक्षलोकं कुत्र वर्त्तत इति शङ्कनीयम्; 'द्यावा' द्युलोको नान्तरिक्षलोकात्, अन्य इति शेष:। भूमिश्च नान्तरिक्षादन्या। उभयोर्द्यावापृथिव्यो-रन्तरिक्षेण सम्बध्यैवावस्थानात्। तस्माद्दर्शितयोर्द्यावापृथिव्योरेवा-न्तरिक्षस्यान्तर्भाव इत्यभिप्राय: * ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां चतुर्थाध्याये (एकोनविंशाध्याये) पञ्चम: खण्ड: ॥ ५ (२७) ॥

---

* नचेत्यादिग्रन्थो लेखकप्रमादप्रवाहादेव सर्वपुस्तकेष्वशुद्धो दृष्ट: शुद्धीकृत एवात्र प्रकाश्यते, तथापि मूलाभिप्रायविरुद्ध एव गम्यते।

॥ अथ षष्ठः खण्डः ॥

बृहच्च वा इद मग्रे रथन्तरं चास्तां वाक् च वै तन्मनश्चास्तां वाग्वै रथन्तरं मनो बृहत्तद् बृहत्पूर्वं ससृजानं रथन्तर मत्यमन्यत तद्रथन्तरं गर्भ मधत्त तद्वैरूप मसृजत ते द्वे भूत्वा रथन्तरं च वैरूपं च बृहदत्यमन्येतां तद् बृहद्गर्भं मधत्त तद्वैराज मसृजत ते द्वे भूत्वा बृहच्च वैराजं च रथन्तरं च वैरूपं चात्यमन्येतां तद्रथन्तरं गर्भं मधत्त तच्छाक्वर मसृजत तानि त्रीणि भूत्वा रथन्तरं च वैरूपं च शाक्वरं च बृहच्च वैराजं चात्यमन्यन्त तद् बृहद्गर्भं मधत्त तद्रैवत मसृजत तानि त्रीण्यन्यानि त्रीण्यन्यानि षट् पृष्ठान्यासंस्तानि ह तर्हि त्रीणि छन्दांसि षट् पृष्ठानि नोदाप्नुवन्त्सा गायत्री गर्भं मधत्त सानुष्टुभ मसृजत त्रिष्टुब् गर्भं मधत्त सा पङ्क्ति मसृजत जगती गर्भं मधत्त सातिच्छन्दस मसृजत तानि त्रीण्यन्यानि त्रीण्यन्यानि षट् छन्दांस्यासन् षट् पृष्ठानि तानि तथाकल्पन्त कल्पते यज्ञो ऽपि तस्यै जनतायै कल्पते यत्रैव मेतां छन्दसां च पृष्ठानां च क्लृप्तिं विद्वान् दीक्षते दीक्षते ॥ ६ ( २८ ) ॥

॥ इत्यैतरेयब्राह्मणे चतुर्थपञ्चिकायां चतुर्थोऽध्यायः ॥४॥

अथास्मिन् द्वादशाहमध्ये पृष्ठ्यषडहे पृष्ठस्तोत्रोपयुक्तानि *
सामानि विधातु माख्यायिका माह—"बृहच्च वा इद मग्रे रथन्तरं
चास्तां; वाक् च वै तन्मनश्चास्तां; वाग्वै रथन्तरम्, मनो बृहत्,
तद् बृहत् पूर्वं ससृजानं रथन्तर मत्यमन्यत; तद्रथन्तरं गर्भ मधत्त,
तद्वैरूप मसृजत"-इति। ये बृहद्रथन्तरे पूर्वम् "इमौ वै लोकौ"-
इत्यादिना संस्तुते ( ३८० पृ० ), ते उभे एव 'इदं' वैरूपादिसाम-
जात मन्तर्भाव्य तदुत्पत्तेः पूर्व मास्ताम्; 'इदं' वैरूपादिसाम-
जात मुत्पत्तेः 'अग्रे' पूर्वं नासीत्। ते च सामनी मनोवाग्रूपे
अभवताम्। तत्र वागेव रथन्तरं साम, मनो बृहत्साम। तदे-
तन्मनोरूपं बृहत्साम 'ससृजानं' सृष्टिं कर्त्तु मुद्युक्तम्। 'तत्' तस्मा
देव सृष्टिसिद्धये 'पूर्वं' प्रथमं वाग्रूपं 'रथन्तरं' साम 'अत्यमन्यत'।
वाग्रूपत्वादेव स्त्रीरूपत्वम्, मनोरूपत्वात् स्वस्य पुरुषरूपत्वम्;
तस्मादतिशयितं तत्स्वरूपम्; तत्र बृहत्साम स्वस्य पुरुषत्वाभि-
मानेन रथन्तरसाम्नि स्त्रीत्वभावनया सङ्गम मकरोदित्यर्थः। तत-
स्त्रीस्थानीयं तद्रथन्तरं साम स्वोदरमध्ये गर्भं मधत्त; धृत्वा च
वैरूपाख्यं पुत्रस्थानीयं सामान्तर मसृजत॥

वैरूपस्योत्पत्ति मभिधाय वैराजसाम्न उत्पत्तिं दर्शयति—"ते
द्वे भूत्वा रथन्तरं च वैरूपञ्च बृहदत्यमन्येतां; तद् बृहद्गर्भ मधत्त,
तद्वैराज मसृजत"-इति। मातृस्थानीयं रथन्तरं, पुत्रस्थानीयं
वैरूपं चेति, 'ते' सामनी द्वे भूत्वा यद् बृहत्सामैकाकित्वेन वर्त्त-
मान मस्ति, तदपत्य मन्येतां, तस्माद् बृहतोऽप्येकाकिनोऽतिशयेन
मन्येतां, न्यूनत्वेन बृहत्साम्नि स्त्रीत्वबुद्धिं कृत्वा संयोग मकुरुताम्।
तत्र बृहत्साम गर्भं धृत्वा वैराजाख्यं सामान्तर मसृजत॥

* ३१४ पृ० ६ पं० द्रष्टव्यानि।

शाक्करसाम्न उत्पत्तिं दर्शयति— "ते द्वे भूत्वा बृहच्च वैराजं च, रथन्तरं च वैरूपं चात्यमन्येतां तद्; रथन्तरं गर्भ मधत्त; तच्छाक्कर मसृजत"-इति। वैराजसाम्नः सृष्टेरूर्द्ध तदुत्पत्तस्य बृहत्साम्नः न्यूनत्वेऽपगते सति 'ते' सामनी द्वे भूत्वा मिलित्वा वैरूपसहितस्य रथन्तरस्य वायूपत्वेन न्यौत्य मभिप्रेत्य न्यौत्यम् 'अत्यमन्येतां' स्वाधिकारं मत्वा संयोग मकुरुताम्। ततो रथन्तरं साम गर्भं धृत्वा शाक्कराख्यं सामान्तर मसृजत॥

रैवतसाम्न उत्पत्तिं दर्शयति—"तानि त्रीणि भूत्वा रथन्तरं च वैरूपं च शाक्करं च, बृहच्च वैराजं चात्यमन्यन्त तद्; बृहद्गर्भ मधत्त, तद्रैवत मसृजत"-इति। मातृस्थानीयं 'रथन्तरं' पुत्रस्थानीये 'वैरूपं' 'शाक्करं' चेति; एवं त्रीणि भूत्वा, वैराजेन युक्तस्य बृहत्साम्नो न्यूनत्वबुद्ध्या 'तदत्यमन्यन्त' तस्मादतिशयं पुत्रस्थानीयं स्वपक्षे मत्वा संयोग मकुर्वत। ततो बृहद्गर्भ मधत्त; गर्भं धृत्वा रैवताख्यं सामान्तर मसृजत॥

उक्तानां षण्णां साम्नां पृष्ठस्तोत्रसाधनत्वं दर्शयति—"तानि त्रीण्यन्यानि त्रीण्यन्यानि षट् पृष्ठान्यासन्"-इति। 'तानि' पूर्वोक्तानि रथन्तरवैरूपशाक्कराणि 'त्रीणि' सामानि, 'अन्यानि' इतरेभ्यो विलक्षणानि, पृष्ठाख्ये षडहे प्रथमतृतीयपञ्चमेष्वयुग्मेष्वहस्सु, पृष्ठस्तोत्रनिष्पादकान्यासन्। तथा बृहद्-वैराज-रैवतरूपाणि 'त्रीणि' सामानि, 'अन्यानि' रथन्तरादिभ्यो विलक्षणानि भूत्वा, द्वितीयचतुर्थषष्ठेषु युग्मरूपेष्वहस्सु पृष्ठस्तोत्रनिष्पादकान्यासन् * ॥

---

* "रथन्तरपृष्ठान्ययुजानि। बृहत्पृष्ठानीतराणि। तृतीयादिषु पृष्ठस्थानेषु द्वितीयानि वैरूपवैराज शाक्कररैवतानि"-इति लाट्य० श्रौ० ७.५.२-४।

अथ षड्विधपृष्ठस्तोत्रसामाधारत्वेन षड्विधानि छन्दांसि दर्श-यति—"तानि ह तर्हि त्रीणि छन्दांसि, षट् पृष्ठानि नोदाप्नु-वंस्ता गायत्री गर्भ मधत्त, सानुष्टुभ मसृजत; त्रिष्टुब् गर्भ मधत्त, सा पङ्क्ति मसृजत; जगती गर्भ मधत्त, सातिच्छन्दस मसृजत; तानि त्रीण्यन्यानि त्रीण्यन्यानि षट् छन्दांस्यासन्; षट् पृष्ठानि तानि तथाकल्पन्त; कल्पते यज्ञोऽपि"—इति। 'तर्हि' तस्मिन् षट्सामसम्पत्तिकाले गायत्री-त्रिष्टुब्-जगतीरूपाणि 'छन्दांसि' त्रीणि भूत्वा, 'तानि' पूर्वोक्तानि षट् पृष्ठसामानि 'नोदाप्नुवन्' पृष्ठानां निष्पत्तिं कर्तुं नाशक्नुवन्। ततो गायत्र्यादीनि त्रीण्यपि गर्भं धृत्वा, पुनः अन्यानि अनुष्टुप्पङ्क्त्यतिच्छन्दोरूपाणि छन्दांस्य-सृजन्त। ततः 'तानि' सिद्धानि गायत्र्यादीनि 'त्रीणि', 'अन्यानि' पूर्वसिद्धत्वेनैव पृथग्भावान्यासन्, तथैवानुष्टुभादीनि 'त्रीणि', 'अन्यानि' छन्दांसि तदानी मुत्पन्नानि, इति मिलित्वा षट् छन्दांस्यासन्। ततः षट्सङ्ख्याकानि पृष्ठसामानि धारयितुं 'तानि' षट् छन्दांसि 'तथा अकल्पन्त' तेनैव क्रमेण समर्थान्यभवन्। प्रथम-द्वितीयतृतीयेष्वहस्सु गायत्रीत्रिष्टुब्जगत्यः पृष्ठस्तोत्रनिष्पादकाः; चतुर्थपञ्चमषष्ठेष्वहस्सु अनुष्टुप्पङ्क्त्यतिच्छन्दांसि स्तोत्रनिष्पाद-कानि। एवं सति यज्ञोऽपि पृष्ठ्यषडहाख्यः * 'कल्पते' स्वप्रयो-जनाय समर्थो भवति॥

वेदनपूर्वक मनुष्ठानं प्रशंसति—"तस्यै जनतायै कल्पते, यत्रैव मेतां छन्दसां च पृष्ठानां च क्लृप्तिं विद्वान् दीक्षते दीक्षते"—इति। 'यत्र' यस्यां जनतायाम्, 'एवम्' उक्तप्रकारेण गायत्र्यादीनां 'छन्दसां' रथन्तरादीनां 'पृष्ठानां' च एतां 'क्लृप्तिं' कल्पनार्थप्रकारं

* जै० सू० २. १. १३–२९ सू०; ५ अधि०।

जानीते, स दीक्षां प्राप्नोति। स पुमान् 'तस्यै जनतायै' तस्यां यज्ञसभायां 'कल्पते' समर्थो भवति। अध्यासोऽध्यायसमाप्त्यर्थः ॥६॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां चतुर्थाध्याये
(एकोनविंशाध्याये) षष्ठः खण्डः ॥ ६ (२८) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायाः चतुर्थोऽध्यायः ॥

## ॥ अथ पञ्चमाध्यायः ॥

(तत्र)

### ॥ अथ प्रथमः खण्डः ॥

॥ ओँ ॥ अग्निर्वै देवता प्रथम महर्वहति त्रिवृत् स्तोमो रथन्तरं साम गायत्री छन्दो यथादेवत मेनेनं यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद यद्वा एति च प्रेति च तत्प्रथमस्याह्नो रूपं यद्युक्तवद्यद्रथवद्यदाशुमद्यत्पिबवद्यत्प्रथमे पदे देवता निरुच्यते यदयं लोको ऽभ्युदितो यद्राथन्तरं यद्गायत्रं यत्करिष्यदेतानि वै प्रथमस्याह्नो रूपाण्युपप्रयन्तो अध्वर मिति प्रथमस्याह्न आज्यं भवति प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपं वायवा याहि दर्शतेति प्रउग मेति प्रथमेऽहनि प्रथमस्याह्नो रूप मा त्वा रथं यथोतय इदं वसो सुत मन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ रथवच्च पिबवच्च प्रथमेऽहनि प्रथमस्याह्नो रूप मिन्द्र मेदीय एदिहीतीन्द्रनिहवः प्रगाथः प्रथमे पदे देवता निरुच्यते प्रथमेऽहनि प्रथमस्याह्नो रूपं प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूप मग्निर्नेता त्वं सोम क्रतुभिः पिन्व-

न्यप इति धाय्याः प्रथमेषु पदेषु देवता निरुच्यन्ते प्रथमेऽहनि प्रथमस्याह्नो रूपम् प्र व इन्द्राय बृहत इति मरुत्वतीयः प्रगाथः प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूप मा यात्विन्द्रो वस उप न इति सूक्त मेति प्रथमेऽहनि प्रथमस्याह्नो रूप मभि त्वा शूर नोनुमो ऽभि त्वा पूर्वपीतय इति रथन्तरं पृष्ठं भवति राथन्तरेऽहनि प्रथमेऽहनि प्रथमस्याह्नो रूपं यद्वावान पुरुतमं पुराषाळिति धाय्याऽऽ वृत्रहेन्द्रो नामान्यप्रा इत्येति प्रथमेऽहनि प्रथमस्याह्नो रूपं पिबा सुतस्य रसिन इति सामप्रगाथः पिबवान् प्रथमेऽहनि प्रथमस्याह्नो रूपं त्य मू षु वाजिनं देवजूत मिति तार्क्ष्यं पुरस्तात्सूक्तस्य शंसति स्वस्त्ययनं वै तार्क्ष्यः स्वस्तितायै स्वस्त्ययन मेव तत् कुरुते स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद ॥ १ ( २८ ) ॥

ज्योतिष्वत्या भावतो द्वादशाहो,
दीक्षाकालो याजनं पाप्मकश्च ।
व्यूढच्छन्दोद्वादशाहप्रशंसा
पृष्ठादीनां छन्दसां तत्र क्लृप्तिः ॥

इदानीं द्वादशाहक्रतौ प्रायणीयोदयनीयावतिरात्रौ, यश्च दशम महः, तत्त्रितयं वर्जयित्वा मध्यगतो यो नवरात्रः, तं विधातु मुपक्रमते—"अग्निर्वै देवता प्रथम महर्वहति, त्रिवृत्स्तोमो रथन्तरं

साम गायत्रीच्छन्दः"-इति। देवतानामग्रो योऽयमग्निरस्ति, सोऽयमत्र देवता भूत्वा नवरात्रस्य प्रथम महः 'वहति' निष्पादयति। तथा स्तोमानां मध्ये त्रिवृत्स्तोमः प्रथमस्याह्नो निर्वाहकः; साम्नां मध्ये रथन्तराख्यं साम प्रथमस्याह्नः पृष्ठसामनिर्वाहकम्; छन्दसां मध्ये गायत्रीच्छन्दः प्रथमस्याह्नो निर्वाहकम्॥ उक्तार्थवेदनं प्रशंसति— "यथादेवत मेनेन यथास्तोमं यथासाम यथाच्छन्दसं राध्नोति य एवं वेद"-इति। 'यः' पुमान् 'एवम्' अग्नित्रिवृद्रथन्तरगायत्रीच्छन्दसां प्रथमेऽहनि देवतात्वं स्तोमत्वं पृष्ठसामत्वं छन्दस्त्वं च क्रमेण वेद, स पुमान् 'एनेन' वेदनेन 'यथा देवतं' तस्याह्न उचितां देवता मनतिक्रम्य, तथा स्तोमसामच्छन्दांस्यप्युचितानि अनतिक्रम्य समृद्धो भवति॥

प्रथमेऽहनि विनियोज्यान्मन्त्रविशेषानादौ तावल्लक्षणमुखेन संक्षिप्य दर्शयति—"यद्वा एति च प्रेति च, तत्प्रथमस्याह्नो रूपं; यद् युक्तवद्रथवदाशुमत्पिबवद्, यत्प्रथमे पदे देवता निरुच्यते, यदयं लोकोऽभ्युदितो, यद्राथन्तरं, यद्गायत्रं, यत्करिष्यदेतानि वै प्रथमस्याह्नो रूपाणि"-इति। 'यद्वै' यस्मिन्नेव मन्त्रे 'एति च' आकारस्वरनिर्देशार्थ मिति च शब्द उपरि प्रयुक्तः। उपसर्गेषु मध्ये योऽयमाङ् अस्ति, सोऽय मा चेति परोक्षं निर्दिश्यते। तथा प्रेत्युपसर्गनिर्देशः। आप्रेत्यनयोरुपसर्गयोरन्यतर उपसर्गो यस्मिन्मन्त्रेऽस्ति, 'तत्' मन्त्रस्वरूपं प्रथमस्याह्नो 'रूपं' लक्षण मित्यर्थः। तथा 'यत्' मन्त्रस्वरूपं 'युक्तवत्' युजिधातूपेतं, 'रथवत्' रथशब्दोपेतम्, 'आशुमत्' आशुशब्दोपेतम्, 'पिबवत्' पिबतिधातूपेतम्, तथा यस्य मन्त्रस्य प्रथमे पादे देवता 'निरुच्यते' निर्दिश्यते, तथा 'अयं लोकः' भूलोकः 'अभ्युदितः' कथितो भवति, तथा

यद् 'राथन्तरं' रथन्तरसामसम्बन्धि, 'गायत्रं' गायत्रीच्छन्दसः सम्बन्धि, गायत्रं साम वा ; 'करिष्यत्' करोतेर्धातोर्भविष्यत्त्व-वाचकम्, ईदृशं 'यद्' यस्मिन् । एतानि वै सर्वाण्यपि प्रथमस्याह्नो 'रूपाणि' निरूपकाणि, लक्षणानीत्यर्थः ॥

एवं लक्षणमुखेन मन्त्रविशेषाणभिधाय प्रतीकोदाहरणेन विस्पष्टं विधत्ते— "उपप्रयन्तो अध्वर मिति प्रथमस्याह्न आज्यं भवति"-इति । प्रकृतौ "प्र वो देवायाग्नये"-इत्यादि प्रथमम्, तद्बाधित्वा नवरात्रस्य प्रथमेऽहनि "उपप्रयन्तः"-इति (सं० १.७४.) सूक्तेन आज्यशस्त्रं शंसनीयम् ॥

तस्मिन् सूक्ते पूर्वोक्तलक्षणेषु एकं लक्षणं योजयित्वा दर्शयति — "प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । 'प्र'शब्द-रूपोऽय मुपसर्गः, सोऽयं सूक्तगते 'प्रयन्त'-इतिपदे दृश्यते ; अतः प्रथमेऽहनि विनियोक्तुं योग्यत्वात् प्रथमस्याह्नोऽनुकूलम् ॥

मन्त्रान्तरे लक्षणान्तरं दर्शयति— "वायवा याहि दर्शतेति प्रउग मेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । यद्यपि "वायवा याहि"-इत्यादिकस्य ( सं० १.२. ) 'प्र'उपसर्गस्य प्राक्-तन्वाचोदकेनैव तत्प्राप्तिः, तथापि लक्षणं दर्शयितु मय मुप-न्यासः । एत्याकाररूपम् यद् मन्त्रेऽस्ति ; आ याहीतिश्रुतत्वात् । अतः प्रथमेऽहनि विनियोक्तुं योग्यत्वात् प्रथमस्याह्नो रूपम् ॥

अथ तृचद्वये लक्षणद्वयं दर्शयति—"आ त्वा रथं यथोतय इदं वसो सुत मन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ, रथवच्च पिब-वच्च, प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । "आ त्वा रथम्"-इति ( सं० ८.६८.१--३. ) तृचो मरुत्वतीयशस्त्रस्य प्रतिपत् ; तच्च रथशब्दोपेतम्, "इदं वसो सुतम्"-इति ( सं० ८.२.१--३. ) तस्य

शस्त्रस्यानुचरः ; तच्च पिबवत् ; पिबा सु पूर्वमिति द्वितीयपादे श्रुतत्वात् । प्रथमेऽहनीत्यादिकं पूर्ववत् ॥

मन्त्रान्तरे लक्षणान्तरस्य दर्शयति— "इन्द्र नेदीय एदिहीतीन्द्रनिहवः प्रगाथः ; प्रथमे पदे देवता निरुच्यते ; प्रथमेऽहनि प्रथमस्याह्नो रूपम्"–इति । "इन्द्र नेदीय"–इत्यय ऋग्द्वयरूपत्वात् प्रगाथः' ( सं० ८.५३.५,६. ) । इन्द्रो नितरा माहूयते यस्मिन् प्रगाथे सोऽयम् 'इन्द्रनिहवः' ; एदिहोत्येव साक्षात् मत्र श्रूयते, प्रगाथस्य प्रथमे पादे इन्द्रेति च देवता निर्दिश्यते ; तदेतत्प्रथमस्याह्नो 'रूपं' लक्षणम् ॥

मन्त्रान्तरे लक्षणान्तरं दर्शयति— "प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः ; प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । 'ब्राह्मणस्पत्यः' ( सं० १.४०.३,४. ), प्रगाथ इत्यनुवर्त्तते । अत्र 'प्र'शब्दो लक्षणम् ॥

अथ मन्त्रत्रये लक्षणं दर्शयति– "अग्निर्नेता, त्वं सोम क्रतुभिः, पिन्वन्त्यप इति धाय्याः ; प्रथमेषु पदेषु देवता निरुच्यन्ते ; प्रथमेऽहनि प्रथमस्याह्नो रूपम्"–इति । शस्त्रमध्ये प्रक्षपणीया ऋचो धाय्याः । "अग्निर्नेता"–इति ( सं० ३. २०. ४. ) प्रथमा धाय्या, "त्वं सोम"–इति ( सं० १.९१.२.) द्वितीया, "पिन्वन्त्यपः" –इति ( सं० १.६४.६. ) तृतीया । एतासां तिसृणा मृचां प्रथमेषु पादेषु अग्निसोममरुद्देवता निर्दिश्यन्ते ; "पिन्वन्त्यपो मरुतः सुदानवः"–इति श्रवणात् * । सोऽयं देवतानिर्देशो लक्षणम् ॥

मन्त्रान्तरे 'प्र'शब्दरूपं लक्षणं दर्शयति— "प्र व इन्द्राय

---

* प्रथमद्वितीययोस्तु ऋचोः मूले प्रतीकग्रहणमात्रत एव देवताश्रवणं स्फुटम् ; तृतीयस्या अपि प्रथमे एव पादे देवताश्रुतिरिति प्रकटयितुं दर्शयते पिन्वन्त्यप इत्यादि ।

हुवत इति ( सं० ८.८९.३,४.) महत्तीय: प्रगाथ: ; प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति ॥

मन्त्रान्तरे आकाररूपं लक्षणं दर्शयति—"आ यात्विन्द्रो वस उप न इति ( सं० ४.२१. ) सूक्तमेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति ॥

अथ निष्केवल्यशस्त्रगतस्य मन्त्रस्य रथन्तरसम्बन्धरूपं लक्षणं दर्शयति— "अभि त्वा शूर नोनुमो, ऽभि त्वा पूर्वपीतय इति रथन्तरम् पृष्ठं भवति ; राथन्तरेऽहनि प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । "अभि त्वा शूर"-इति ( सं० ७.३२.२२,२३.) रथन्तरसाम्नो योनिभूत: ; "अभि त्वा पूर्वपीतये"-इति ( सं० ८.३.७,८. ) तस्यानुचर: । अत: अभि त्वा शूरेत्यत्र रथन्तरसामसाध्यं पृष्ठं भवति । इदं प्रगाथद्वयं रथन्तरसामसम्बन्धिन्यहनि योग्यम् । अतो रथन्तरसम्बन्धस्य रूपस्य लक्षणस्य सद्भावात् प्रथमेऽहनि प्रयुज्यते ॥

मन्त्रान्तरे त्वाकाररूपं लक्षणं दर्शयति— "यद्वावान पुरुतमं पुराषाळिति धाय्या ; ऽऽ वृत्रहेन्द्रो नामान्यप्रा इत्येति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । "यद्वावान"-इति ( सं० १०.७४. ६. ) शस्त्रमध्ये प्रक्षेपणीया ; तस्या द्वितीयपादादौ आ वृत्रहेत्याकार: श्रुत: ॥

मन्त्रान्तरे पिबतिधातुरूपं लक्षणं दर्शयति—"पिबा सुतस्य रसिन इति सामप्रगाथ: ; पिबवान् प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । "पिबा सुतस्य"-इत्ययं कस्यचित्सामविशेषस्य आधारभूत: प्रगाथ: ( सं० ८.३.१,२. * ) ॥

* छ० आ० ३.१.५.७ ऋषि गे० गा० ६.२.१२, पृष्ठ ( योनिसाम );

अथ निविद्धानीयस्य सूक्तस्यादौ किञ्चित्सूक्तान्तरं विधत्ते— "त्य मू षु वाजिनं देवजूत मिति ( सं० १०,१७८. ) तार्क्ष्यं पुरस्तात्सूक्तस्य शंसति ; स्वस्त्ययनं वै तार्क्ष्यः स्वस्तितायै"-इति। तार्क्ष्यो देवता अस्य 'तार्क्ष्यम्', 'स्वस्त्ययनं' क्षेमप्राप्तिरूपम् ; अतो निविद्धानीयसूक्तस्य पुरस्तात् तार्क्ष्यसूक्तशंसनं 'स्वस्तितायै' यजमानस्य क्षेमाय भवति ॥ वेदनं प्रशंसति— "स्वस्त्ययन मेव तत् कुरुते स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद"-इति । वेदिता तेन वेदनेन 'स्वस्त्ययन मेव' क्षेमप्राप्ति मेव सम्पादयति। तथा द्वादशाहद्वारा संवत्सरसत्रस्य 'पार मश्नुते' समाप्तिं प्राप्नोति ॥१॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां पञ्चमाध्याये
( विंशाध्याये ) प्रथमः खण्डः ॥ १ ( २८ ) ॥

———

॥ अथ द्वितीयः खण्डः ॥

आ न इन्द्रो दूरादा न आसादिति सूक्तं मेति प्रथमेऽहनि प्रथमस्याह्नो रूपं सम्पातौ भवतो निष्केवल्यमरुत्वतीययोर्निविद्धाने वामदेवो वा इमांल्लोकानपश्यत्तान्सम्पातैः समपतद्यत्सम्पातैः सम-

उ० आ० ६.२.५.१,२ ऋचौ; प्रगाथद्वये ऊ० गा० १६.२.१२. पृष्ठं ( सौपर्णम् )। अथान्यान्यपि सामानि सन्ति, ततश्च 'केषाञ्चित्साम्नां माधारभूतः प्रगाथः'-इति वक्तव्यं स्यात्।

एतत्तत्सम्पातानां सम्पातत्वं तद्यत्सम्पातौ प्रथमे-ऽहनि शंसति स्वर्गस्य लोकस्य समष्ट्यै सम्पत्त्यै सङ्गत्यै तत्सवितुर्वृणीमह ऽद्या नो देव सवितरिति वैश्व-देवस्य प्रतिपदनुचरौ राथन्तरेऽहनि प्रथमेऽहनि प्रथमस्याह्नो रूपं युञ्जते मन उत युञ्जते धिय इति सावित्रं युक्तवत्प्रथमेऽहनि प्रथमस्याह्नो रूपं प्र द्यावा यज्ञैः पृथिवी ऋतावृधेति द्यावापृथिवीयं प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपं मिहेह वो मनसा बन्धुता नर इत्यार्भवं यद्वा एति च प्रेति च तत्प्र-थमस्याह्नो रूपं तद्यत्प्रेति सर्वं मभविष्यत् प्रैष्य-न्नेवास्माल्लोकाद्यजमाना इति तद्यदिहेह वो मनसा बन्धुता नर इत्यार्भवं प्रथमेऽहनि शंसत्ययं वै लोक इहेहास्मिन्नेवैनांस्तल्लोके रमयति देवान् हुवे बृह-च्छ्रवसः स्वस्तय इति वैश्वदेवं प्रथमे पदे देवता निरुच्यन्ते प्रथमेऽहनि प्रथमस्याह्नो रूपं महान्तं वा एतेऽध्वान मेष्यन्तो भवन्ति ये संवत्सरं वा द्वादशाहं वासते तद्यद्देवान् हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं प्रथमे ऽहनि शंसति स्वस्तितायै स्वस्त्ययन मेव तत्कुरुते स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद येषां चैवं विद्वानेतद्धोता देवान् हुवे बृहच्छ्र-

वसः स्वस्तय इति वैश्वदेवं प्रथमे ऽहनि शंसति वैश्वानराय पृथुपाजसे विप इत्याग्निमारुतस्य प्रतिपत्प्रथमे पदे देवता निरुच्यते प्रथमे ऽहनि प्रथमस्याह्नो रूपं प्र त्वक्षसः प्र तवसो विरप्शिन इति मारुतं प्रेति प्रथमे ऽहनि प्रथमस्याह्नो रूपं जातवेदसे सुनवाम सोम मिति जातवेदस्यां पुरस्तात्सूक्तस्य शंसति स्वस्त्ययनं वै जातवेदस्याः स्वस्तितायै स्वस्त्ययन मेव तत् कुरुते स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद प्र तव्यसीं नव्यसीं धीति मग्नय इति जातवेदस्यं प्रेति प्रथमे ऽहनि प्रथमस्याह्नो रूपं समान माग्निमारुतं भवति यच्चाग्निष्टोमे यद्वै यज्ञे समानं क्रियते तत्प्रजा अनु समनन्ति तस्मात्समान माग्निमारुतं भवति ॥ २ (३०) ॥

यस्य सूक्तस्य पुरस्तात्तार्क्ष्यशंसनं विहितम्, तस्मिन्निविद्धान-सूक्ते आकाररूपं लक्षणं दर्शयति— "आ न इन्द्रो दूरादा न आसादिति (सं० ४.२०.) सूक्त मेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति ॥

इदानीं निष्केवल्यमरुत्वतीययोः शस्त्रयोर्निविद्धाने सूक्ते स्तौतु माह— "सम्पाती भवतो निष्केवल्यमरुत्वतीययोर्निविद्धाने; वामदेवो वा इमांल्लोकानपश्यत्, तान्सम्पातैः समपतद् ; यत्सम्पातैः समपतत्तत्सम्पातानां सम्पातत्वं ; तद्यत्सम्पाती प्रथमेऽहनि शंसति,

स्वर्गस्य लोकस्य समष्टो सम्पत्त्यै सङ्गत्यै"-इति। सम्पत्तिं प्राप्नुवन्ति आभ्यां यजमानाः सर्वान् लोकानिति 'सम्पातौ'। निष्केवल्यमरुत्वतीयनिविद्धानयोः सूक्तयोर्वैकृतयोः सम्पात इति सञ्ज्ञा। "आ याह्विन्द्रो वसः"-इति (सं० ४. २१.) मरुत्वतीयशस्त्रस्य निविद्धानं सूक्तम्; "आ न इन्द्रः"-इति (सं० ४. २०.) निष्केवल्यस्य निविद्धानं सूक्तम्; एतयोः सम्पात इति सञ्ज्ञा प्रतिपाद्यते*। पुरा कदाचित् वामदेवः 'इमान्' भूरादीन् लोकान् दृष्ट्वा, तत्प्राप्त्युपायं विचार्य्य, सम्पातसूक्तैस्तान् प्राप्तवान्। अतः 'सम्पतति' सम्यक् प्राप्नोति लोकानेतैरिति 'सम्पातत्वं' नाम सम्पन्नम्। तथा सत्यत्र प्रथमेऽहनि निष्केवल्यमरुत्वतीययोः सम्पातनामके सूक्ते यदि शंसेत्, तदानीं तच्छंसनं स्वर्गलोकप्राप्ति-भोग्यवस्तुसम्पत्ति-तद्भोगसम्बन्धार्थं सम्पद्यते॥

अथ द्वयोस्तृचयो रथन्तरसम्बन्धरूपं लक्षणं दर्शयति—"तत्सवितुर्वृणीमहे, ऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ; राथन्तरेऽहनि प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति। "तत्सवितुः" -इति (सं० ५. ८२. १-३.) तृचो रथन्तरसाम्ना सह प्रयुज्यमानो वैश्वदेवशस्त्रस्य प्रतिपत्; "अद्या नः"-इति (सं० ५.८२.४-६.) तृचस्तस्यानुचरः; अत उभयोरपि रथन्तरसम्बन्धोऽस्ति,-रथन्तरसम्बद्धेऽहनि योग्यतास्ति॥

सूक्तान्तरे युजिधातुरूपं लक्षणं दर्शयति—"युञ्जते मन उत युञ्जते धिय इति सावित्रं; युक्तवत्प्रथमेऽहनि प्रथमस्याह्नो रूपम्" -इति। प्रथमाया ऋचोऽवसाने "देवस्य सवितुः परिष्टुतिः"-इति

* "आ न इन्द्रो दूरादा न आसादिति सम्पातः"-इति ऐ० आर० १. ९. २. ३.।

श्रुतत्वादिदं ( सं० ५. ८१. ) सवितृदेवताकम्। इह युजिधातुस्तु विस्पष्टः ॥

सूक्तान्तरे प्रशब्दरूपं लक्षणं दर्शयति—"प्र द्यावा यज्ञैः पृथिवी ऋतावृधेति ( सं० १. १५९. ) द्यावापृथिवीयं ; प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"–इति ॥

अग्निवैश्वदेवशस्त्रे सूक्तान्तरं विधत्ते— "इहेह वो मनसा बन्धुता नर इत्यार्भवं ; यद्वा एति च प्रेति च तत्प्रथमस्याह्नो रूपं, —तद्यत्प्रेति सर्वं मभविष्यत्प्रैष्यन्नेवास्माल्लोकाद्यजमाना इति ; तद्यदिहेह वो मनसा बन्धुता नर इत्यार्भवं प्रथमेऽहनि शंसत्ययं वै लोक इहेहाग्निरेवैनांस्तल्लोके रमयति"–इति। "इहेह वः"– इत्येतत्सूक्तम् ( सं० ३.६०. ) ऋभुदेवताकम् ; द्वितीयाया ऋचोऽन्ते "तेन देवत्व मृभवः समानश"–इतिश्रवणात्। आकार–प्र–शब्दा- दिकं लक्षणं मन्त्रे नास्तीत्याशङ्क्य 'यद्वै'–इत्यादिना तत्सद्भावे बाध उपन्यस्यते। यदेतदेति च प्रेति चेति, तदेतत्प्रथमस्याह्नो 'रूपं' लक्षण मिति पूर्वं मुक्तम् ( ४०२ पृ० ) ; 'तत्' तथा सति यदि प्रेत्यनेन लक्षणेन युक्तं 'सर्वं' सूक्तजातम् अभविष्यत्, तदानीं यज- माना अस्माल्लोकात् 'प्रैष्यन्' प्रैष्यन्ति मरिष्यन्ति एवेति बाधोप- न्यासः। 'तद्यदि'–इत्यादिना समाधान मुपन्यस्यते। यस्मात् प्रशब्द- योगे बाधोऽस्ति, तस्मात्कारणादिहेहेति सूक्तं यदि प्रथमेऽहनि शंसेत्, तदानी मिहेहशब्देनास्य भूलोकस्य विवक्षितत्वाद् 'अग्निरेव' भूलोके एव तत्सूक्तपाठेन 'एनान्' यजमानान् 'रमयति' चिरं क्रीडयति ; ततः प्रशब्दप्रयुक्तो मरणबाधोऽपि परिहृतो भवति ॥

सूक्तान्तरस्य प्रथमपादे देवताभिधानं लक्षणं दर्शयति —"देवान् हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं प्रथमे पदे देवता निरुच्यन्ते ;

प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । "देवान्"-इत्यादिके सूक्ते बहुवचनान्तस्य देवशब्दस्य श्रवणाद्देवताबाहुल्येनेदं सूक्तं ( सं० १०. ६६. ) वैश्वदेवम् । प्रथमपादे देवशब्दस्तु विस्पष्टः ॥

तत्र स्वस्तिशब्दस्य तात्पर्य्यं दर्शयति—"महान्तं वा एतेऽध्वानमेष्यन्तो भवन्ति, ये संवत्सरं वा द्वादशाहं वासते ; तद्यद्देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं प्रथमेऽहनि शंसति, स्वस्तितायै"-इति । 'ये' यजमानाः संवत्सरसत्रं वा द्वादशाहं वा अनुतिष्ठन्ति, एते दीर्घं मध्वानं गन्तु मुद्युक्ता भवन्ति ; प्रयोगबाहुल्येनैकाहवत् सहसा समाप्त्यभावात् । अतो देवानित्यादिसूक्ते "स्वस्तये"-इत्येतस्य पदस्य शंसनं 'स्वस्तितायै' क्षेमार्थं भवति ॥

वेदनं प्रशंसति—"स्वस्त्ययन मेव तत् कुरुते स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद, येषां चैवं विद्वानेतद्धोता देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं प्रथमेऽहनि शंसति"-इति । उक्तार्थस्य वेदिता तेन 'स्वस्त्ययन मेव' द्वादशाहस्य क्षेमप्राप्ति मेव कुरुते,—क्षेमेणैव संवत्सरसत्रस्य समाप्तिं प्राप्नोति । किञ्च 'येषां' यजमानानामुक्तार्थवेदी होता शंसति, तेऽपि यजमाना द्वादशाहं क्षेमेण प्राप्नुवन्ति, संवत्सरसत्रं च समापयन्ति ॥

सूक्तान्तरस्य प्रथमे पादे देवताभिधानं लक्षणं दर्शयति—"वैश्वानराय पृथुपाजसे विप इत्याग्निमारुतस्य प्रतिपत् ; प्रथमे पदे देवता निरुच्यते, प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । आग्निमारुतशस्त्रस्य "वैश्वानराय"-इति (सं० ३.३.) सूक्तं प्रतिपत् कर्त्तव्यम् । स एव शब्दो विस्पष्टं देवता मभिधत्ते ॥

सूक्तान्तरे प्रशब्दरूपं लिङ्गं दर्शयति—"प्रत्वक्षसः प्रतवसो विरप्शिन इति मारुतं ; प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-

इति । "प्रत्वक्षसः"--इति (सं० १.८७.) सूक्ते द्वितीयस्या ऋचो द्वितीयपादे "वयं इव मरुतः"-इतिश्रवणात् इदं सूक्तं मरुद्देवताकं शंसेत् । अत्र 'प्र'शब्दो विस्पष्टः ॥

वक्ष्यमाणस्य जातवेदस्यसूक्तस्य पुरस्तादेतां ऋचं विधत्ते— "जातवेदसे सुनवाम सोम मिति जातवेदस्यां पुरस्तात्सूक्तस्य शंसति ; स्वस्त्ययनं वै जातवेदस्याः * स्वस्तितायै"—इति। जातवेदा देवता यस्या ऋचः सेयं 'जातवेदस्या' (सं० १.९९.१.) ; तद्देवताकत्वं प्रथमपादे देवताभिधानं लिङ्गं च विस्पष्टम् । तस्या ऋचि "अरातीयतो नि दहाति"—इति शत्रुदाहश्रवणात्, "नावेव सिन्धुम्"--इति नौदृष्टान्तेन दुरितात्ययश्रवणात् च 'स्वस्त्ययनं' क्षेमगमन मत्र विद्यते ; तस्मादियं क्षेमप्राप्तये भवति ॥ वेदनं प्रशंसति— "स्वस्त्ययन मेव तत् कुरुते, स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद"--इति ॥

सूक्तान्तरे प्रशब्दलिङ्गं दर्शयति— "प्र तव्यसीं नव्यसीं धीति मग्नय इति जातवेदस्यं ; प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपम्"-इति । यद्यप्यस्मिन् सूक्ते जातवेदःशब्दो न श्रुतः, तथापि तदर्थवाची शब्दः श्रूयते ; जात मुत्पन्नं विश्वं तद्वेत्तीति 'जातवेदाः', तत्पर्यायो विश्ववेदःशब्दः । स च "य मेरिरे भृगवो विश्ववेदसम्" -इति चतुर्थ्यां ऋचि श्रूयते । तस्मादिदं सूक्तं (सं० १. १४३.) 'जातवेदस्यं' निविद्धानीयं शंसेत् । अत्र "प्र तव्यसीम्"--इति प्रशब्दो विस्पष्टः ॥

---

* "जातवेदस्या"—इति निर्विसर्गपाठो दृश्यते भाष्यपुस्तकेषु, अर्थतत्र गम्यते तथैव ; परं मूलपुस्तकविरुद्ध एव सः । "जातवेदसे सुनवाम सोम मित्यास्तिमाद्यते जातवेदस्यानाम्"—इति आश्व० श्रौ० ७.१.१४ । 'जातवेदस्यनिवित्सम्बन्धिसूक्तसम्भवात् जातवेदस्याना मिति बहुवचनं जात्यभिप्रायम्'—इति च तत्र हरिनारायणवृत्तिः।

वैश्वानरायेत्यादिकं यदाग्निमारुतं शस्त्रं सूक्तम्, तदेतत् प्रशंसति— "समान माग्निमारुतं भवति, यच्चाग्निष्टोमे, यद्ध यज्ञे, समानं क्रियते ; तत् प्रजा अनु समनन्ति ; तस्मात्समान माग्निमारुतं भवति"-इति । अस्मिन् प्रथमेऽहनि यदाग्निमारुतं शस्त्रं सूक्तम्, यच्चाग्निष्टोमे पूर्वं निरूपित माग्निमारुतं शस्त्रम्, तदुभयं 'समानम्' एकविधम् ; न्यूनाधिकमन्त्राणा मभावात् । यज्ञे यदेवाङ्गं समानं क्रियते, 'तत्' अङ्गम् 'अनु' पश्चात् 'प्रजाः' ऋत्विग्रूपाः पुत्रादिरूपाश्च 'समनन्ति' सम्यक् चेष्टन्ते, सुखेन जीवन्तीत्यर्थः । तस्मात् 'समानं' तुल्य माग्निमारुतं शस्त्रं कर्त्तव्यम् ॥

अत्र प्रथमस्याह्नो लिङ्गेषु 'आशुमद्', 'गायत्रं', 'करिष्यत्', 'अयं लोकोऽभ्युदितः' इति लिङ्गचतुष्टय मत्र नोदाहृतम्, तद्यथासम्भव मन्वेष्टव्यम् ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां पञ्चमाध्याये
( विंशाध्याये ) द्वितीयः खण्डः ॥ २ ( १० ) ॥

---

॥ अथ तृतीयः खण्डः ॥

इन्द्रो वै देवता द्वितीय महर्वहति पञ्चदश स्तोमो बृहत्साम त्रिष्टुप् छन्दो यथादेवत मेनेन यथास्तोमं

यथासामं यथाछन्दसं राध्नोति य एवं वेद यद्वै नेति न प्रेति यत्स्थितं तद् द्वितीयस्याह्नो रूपं यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद्वृषण्वद्यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदन्तरिक्षमभ्युदितं यद्बार्हतं यत् त्रैष्टुभं यत्कुर्वदेतानि वै द्वितीयस्याह्नो रूपाण्यग्निं दूतं वृणीमह इति द्वितीयस्याह्न आज्यं भवति कुर्वद् द्वितीये ऽहनि द्वितीयस्याह्नो रूपं वायो ये ते सहस्रिण इति प्रउगं सुतः सोम ऋतावृधेति वृधन्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपं विश्वानरस्य वस्पतिमिन्द्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ वृधन्वद्वान्तर्वच्च द्वितीयेऽहनि द्वितीयस्याह्नो रूपं मिन्द्र नेदीय एदिहीत्यच्युतः प्रगाथ उत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणस्पत्य ऊर्ध्ववान् द्वितीयेऽहनि द्वितीयस्याह्नो रूपमग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्या अच्युता बृहदिन्द्राय गायतेति मरुत्वतीयः प्रगाथो येन ज्योतिरजनयन्नृतावृध इति वृधन्वान् द्वितीयेऽहनि द्वितीयस्याह्नो रूपमिन्द्र सोमं सोमपते पिबेममिति सूक्तं सजोषा रुद्रैस्तृपदा वृषस्वेति वृषण्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपं त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति

बृहत्पृष्ठं भवति बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपं यद्वावानेति धाय्याच्युतोभयं शृणवच्च न इति सामप्रगाथो यच्चिद्ध मद्य यद् च क्ष चासीदिति बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपं त्य मू षु वाजिनं देवजूत मिति तार्क्ष्योऽच्युतः ॥ ३ ( ३१ ) ॥

द्वादशाहगतनवरात्रे प्रथम महर्निरूप्य द्वितीय महर्निरूपयति—"इन्द्रो वै देवता द्वितीय मह्वर्वहति, पञ्चदश स्तोमो बृहत्साम त्रिष्टुप् छन्दः"–इति। देवतानां मध्ये इन्द्रो देवता, स्तोमानां मध्ये पञ्चदशः स्तोमः, साम्नां मध्ये बृहत्साम, छन्दसां मध्ये त्रिष्टुप् छन्दः; इत्येतच्चतुष्टयं द्वितीयस्याह्नो निर्वाहकम् ॥ वेदनं प्रशंसति—"यथादेवत मेनेन यथास्तोमं यथासाम यथाच्छन्दसं राध्नोति य एवं वेद"–इति। वेदिता स्वकीयवेदनेन यथोक्तदेवतास्तोमसामच्छन्दांस्यनतिक्रम्य तत्प्रसादेन समृद्धो भवति ॥

अथ द्वितीयस्याह्नो गमकानि मन्त्रलिङ्गानि निर्दिशति—"यद्वै नेति न प्रेति, यत् स्थितं, तद् द्वितीयस्याह्नो रूपं; यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद्वृषण्वद्यद्वृधन्वद्, यन्मध्यमे पदे देवता निरुच्यते, यदन्तरिक्ष मभ्युदितं, यद्बार्हतं, यत् त्रैष्टुभं, यत् कुर्वदेतानि वै द्वितीयस्याह्नो रूपाणि"–इति। प्रथमस्याह्न एति प्रेति लिङ्गद्वयं 'यद्वै' यदेवोक्तम्, तदत्र द्वितीयस्याह्नो लिङ्गं न भवतीति नकारद्वयेनोभयं निषिध्यते। 'यत् स्थितं' तिष्ठतिधातु-

रूपवद् बहुषु स्थानेष्वप्रच्युतत्वेनावस्थितं च मन्त्रे दृश्यते, तद् द्वितीयस्याह्नो 'रूपं' लिङ्गम्। तथैवोर्ध्वशब्दोपेतम्, प्रतिशब्दोपेतम्, अन्तःशब्दोपेतं, वृषशब्दोपेतं, वृधशब्दोपेतं च यदाम्नातम्, तत्सर्वं द्वितीयस्याह्नो रूपम्। यत्र साक्षाच्छब्दो न श्रूयते, तत्र तदर्थो द्रष्टव्यः। मध्यमे पदे देवताभिधानम्, अन्तरिक्षलोकाभिधानम्, बृहत्सामसम्बन्धम्, त्रिष्टुप्छन्दस्सम्बन्धम्, वर्त्तमानार्थप्रत्यययुक्त-करोतिधातुरूप मित्येतानि सर्वाणि द्वितीयस्याह्नो 'रूपाणि' निरूपकाणि लिङ्गानि द्रष्टव्यानि ॥

अस्मिन् द्वितीयेऽहन्याज्यशस्त्रं विधत्ते—"अग्निं दूतं वृणी-मह इति ( सं० १, १२. ) द्वितीयस्याह्न आज्यं भवति ; कुर्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति। अत्र कुर्वदिति लिङ्गोपन्यासः। यद्यप्यग्निं दूत मित्यादौ साक्षात् कुर्वच्छब्दो न श्रूयते, तथापि करोत्यर्थस्य सर्वधातुगतसामान्यत्वात् वर्त्त-मानार्थवाचिप्रत्ययान्तं धातुमात्रं कुर्वच्छब्देन विवक्षितम्। अत्रापि "वृणीमहे"-इति वर्त्तमानार्थवाचिप्रत्ययान्तो धातुः श्रूयते। तस्मात् द्वितीयेऽहन्येतत्सूक्तं विनियोक्तुं योग्यम् ; ततो द्वितीय-स्याह्नो लिङ्गम् ॥

आज्यशस्त्रं विधाय प्रउगशस्त्रं विधत्ते—"वायो ये ते सहस्रिण इति ( सं० २, ४१. ) प्रउगं ; सुतः सोम ऋतावृधेति वृधन्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति। "वायो ये ते"-इत्यादिकं शस्त्रं कुर्य्यात्। एतस्मिन् सूक्ते चतुर्थ्या ऋचो द्वितीयः पादः "सुतः सोम ऋतावृधा"-इति ; अस्य पादस्यान्ते वृधेति-श्रवणादिदं प्रउगं 'वृधन्वत्' वृधिधातुयुक्तम्। द्वितीयेऽहनी-त्यादिकं पूर्ववत् ॥

अथ महत्वतीयं शस्त्रं विधत्ते— "विश्वानरस्य वस्पति मिन्द्र इत् सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ ; वृधन्वन्नान्तर्वत्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति। "विश्वानरस्य"-इत्ययं तृचः ( सं० ८. ६८. ४-६.) शस्त्रस्य प्रतिपत्। तस्मिन् तृचे द्वितीयस्या ऋचः प्रथमपादे 'वृधन्वत्' वृधिधातुयुक्तं लिङ्ग मस्ति; "अभिष्टये सदावृधम्"-इतिश्रवणात्। "इन्द्रः"-इत्ययं ( सं० ८. २. ४-६.) तृचोऽनुरूपः। तत्रान्तःशब्दयुक्तं लिङ्ग मस्ति ; प्रथमाया ऋचस्तृतीयपादे 'अन्तर्देवान्'-इतिश्रवणात् ॥

अथ प्रगाथद्वये लिङ्गद्वयं दर्शयति— "इन्द्र नेदीय एदिहीत्यच्युतः प्रगाथ, उत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणस्पत्य ऊर्ध्ववान्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति। "इन्द्र नेदीयः"-इत्यादिकः प्रगाथः ( सं० ८.५३.५,६.) प्रथमेऽहन्यपि विहितः, उत्तरत्रापि विधास्यते ; तस्मादयं विधीयमानोऽच्युतो भवति, प्रच्युतेरभावात्। तद्दिद मच्युतत्वं स्थितशब्दार्थत्वात् स्थितवल्लिङ्गम्। "उत्तिष्ठ"-इत्ययं प्रगाथः ( सं० १. ४०. १, २ ) ऊर्ध्वलिङ्गवान् ; ऊर्ध्ववाचिन उच्छब्दस्य श्रवणात् ॥

अथ तिसृषु धाय्यासु अच्युतत्वं लिङ्गं दर्शयति— "अग्निर्नेता, त्वं सोम क्रतुभिः, पिन्वन्त्यप इति धाय्या अच्युताः"-इति। "अग्निर्नेता"-इति ( सं० ३, २०. ४. ) प्रथमा धाय्या, "त्वं सोम" -इति ( सं० १. ९१. २. ) द्वितीया, "पिन्वन्त्यपः"-इति ( सं० १.६४.६.) तृतीया। प्रथमेऽहन्यपि एतासां विहितत्वादच्युतत्वम् ॥

प्रगाथान्तरे लिङ्गं दर्शयति—"बृहदिन्द्राय गायतेति मरुत्वतीयः प्रगाथो, येन ज्योतिरजनयन्नृतावृध इति वृधन्वान्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति। "बृहदिन्द्राय" इत्येषो मरु-

देवताकः (सं० ८.८९.१,२.); "मरुतो बृहद्भानम्"–इति द्वितीय-पादे श्रवणात्। तस्य "येन ज्योतिः"–इति तृतीयः पादः; तत्र "ऋतावृधः"–इतिश्रवणात् अयं प्रगाथो वृधिधातुरूपलिङ्गवान्॥

लिङ्गदर्शनद्वारा सूक्तं विधत्ते—"इन्द्र सोमं सोमपते पिबेम मिति सूक्तं; सजोषा रुद्रैस्तृपदा वृषस्वेति वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"–इति। "इन्द्र सोमम्"–इत्यस्मिन् सूक्ते (सं० ३. ३२.) "सजोषाः"–इत्यादिको द्वितीयस्या ऋचश्चतुर्थः पादः; तत्र वृषस्वेतिश्रवणात् वृषण्लिङ्ग मस्ति॥

अथ निष्केवल्यशस्त्रस्य स्तोत्रियानुरूपयोः प्रगाथयोः बृह-त्सामसम्बन्धरूपं लिङ्गं दर्शयति—"त्वा मिद्धि हवामहे, त्वं ह्येहि चेरव इति बृहत्पृष्ठं भवति; बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"–इति। "त्वा मिद्धि"–इति (सं० ६.४६.१,२.) बृहत्साम्न आधारभूतः स्तोत्रियः प्रगाथः; "त्वं ह्येहि"–इत्यनुचरः प्रगाथः (सं० ८. ६१. ७, ८.)। प्रथमे प्रगाथे बृहत्सामयुक्तं पृष्ठस्तोत्रं भवति। अत्र प्रगाथद्वयस्य बृहत्सामसम्बन्धात् 'बार्हते' बृहत्सामसम्बन्धिन्यहनि तदुभयं योग्यम्; द्वितीयस्य चाह्नो बृह-त्सामसम्बन्धित्वात् तस्मिन्नहनि विनियोक्तव्यम्। अयञ्च बृह-त्सामसम्बन्धो द्वितीयस्याह्नो लिङ्गम्॥

अथैकस्या ऋचश्च्युतत्वं लिङ्गं दर्शयति—"यद्वावानेति (सं० १०.७४.६.) धाय्याच्युता"–इति। प्रथमेऽहन्यप्यस्या ऋचो विहि-तत्वाच्च्युतत्वम्॥

अथ प्रगाथान्तरे बृहत्सामसम्बन्धरूपं लिङ्गं दर्शयति—"उभयं शृणवच्च न इति सामप्रगाथो, यच्चेद मद्य यदु च ह्य आसीदिति बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"–

इति । "उभयम्"-इत्यादिको बृहत्सामसहप्रयुज्यमानः प्रगाथः (सं० ८. ६१. १, २.) । उभयशब्दस्य कोऽर्थः सोऽभिधीयते— 'अद्य' अस्मिन् दिने 'यत्' कार्य्यं मासीत्, 'इदञ्च' कार्य्यं मेकम्; 'यदु च' यदपि 'श्वः' पूर्वेद्युः कार्य्यं मासीत्, तदपीत्येवं कार्य्य-द्वयम् । 'शृणवत्' शृत मासीत् । इति मन्त्रगतस्योभयं शृणव-दित्यस्यार्थः । बार्हत इत्यादि पूर्ववत् ॥

सूक्तान्तरे पूर्ववदच्युतत्वं लिङ्गं दर्शयति—"त्य मू षु वाजिनं देवजूत मिति (सं० १०. १७८.) तार्क्ष्योऽच्युतः"-इति । तार्क्ष्य-देवताकस्य सूक्तविशेषस्य प्रथमेऽहनि विहितत्वादुत्तरोत्तरो-पयोक्त्वादच्युतत्वम् ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां पञ्चमाध्याये (विंशाध्याये) तृतीयः खण्डः ॥ ३ (३१) ॥

———

॥ अथ चतुर्थः खण्डः ॥

या त ऊतिरवमा या परमेति सूक्तं जहि वृष्ण्यानि कृणुही पराच इति वृषण्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपं विश्वो देवस्य नेतुस् तत्सवितुर्वरेण्य मा विश्वदेवं सत्पति मिति वैश्वदेवस्य प्रतिपद-नुचरौ बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो

रूपं मुदु ष्य देवः सविता हिरण्ययेति सावित्रं मूर्द्ध-
वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपं ते हि द्यावा-
पृथिवी विश्वशम्भुवेति द्यावापृथिवीयं सुजन्मनो
धिषणे अन्तरीयत इत्यन्तवद् द्वितीयेऽहनि द्विती-
यस्याह्नो रूपं तक्षन्रथं सुवृतं विद्मनापस इत्या-
र्भवं तक्षन् हरी इन्द्रवाहा वृषण्वसू इति वृष-
ण्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपं यज्ञस्य
वो रथ्यं विश्पतिं विशा मिति वैश्वदेवं वृषा
केतुर्यजतो द्या मशायतेति वृषण्वद् द्वितीयेऽहनि
द्वितीयस्याह्नो रूपं तद् शार्यात मङ्गिरसो वै
स्वर्गाय लोकाय सत्र मासत ते ह स्म द्वितीयं
द्वितीय मेवाहरागत्य मुह्यन्ति तान्वा एतच्छार्यातो
मानवो द्वितीयेऽहनि सूक्त मशंसयत् ततो वै ते प्र
यज्ञ मजानन् प्र स्वर्गं लोकं तद्यदेतत्सूक्तं द्वितीये-
ऽहनि शंसति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानु-
ख्यात्यै पृक्षस्य वृष्णो अरुषस्य नू सह इत्याग्नि-
मारुतस्य प्रतिपद् वृषण्वद् द्वितीयेऽहनि द्वितीय-
स्याह्नो रूपं वृष्णे शर्धाय सुमखाय वेधस इति
मारुतं वृषण्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूपं
जातवेदसे सुनवाम सोम मिति जातवेदस्या-

च्युता यज्ञेन वर्द्धत जातवेदस मिति जातवेदस्यं वृधन्वद् द्वितीयेऽहनि द्वितीयस्याह्नो रूप मह्नो रूपम् ॥ ४ ( ३२ ) ॥

## ॥ इत्यैतरेयब्राह्मणे चतुर्थपञ्चिकायां पञ्चमोध्यायः ॥५॥

सूक्तान्तरे वृधशब्दोपेतं लिङ्गं दर्शयति— "या त ऊतिरवमा या परमेति सूक्तं; जहि वृष्ण्यानि कृणुही पराच इति वृधन्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति। "या त ऊतिः"-इत्यस्मिन् सूक्ते ( सं० ६. २५. ) "जहि वृष्ण्यानि"-इति तृतीयस्या ऋचश्चतुर्थः पादः। तत्र वृधशब्दयुक्तं लिङ्गं दृश्यते ॥

अथ वैश्वदेवशस्त्रगतयोस्तृचयोर्बृहत्सामसम्बन्धरूपं लिङ्गं दर्शयति— "विश्वो देवस्य नेतुस्तत्सवितुर्वरेण्य मा विश्वदेवं सत्पति मिति वैश्वदेवस्य प्रतिपदनुचरौ; बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति। "विश्वो देवस्य"-इत्येका ऋक् ( सं० ५. ५०. १. ), "तत्सवितुः"--इति द्वे ऋचौ ( सं० ३. ६२. १०,११.) ; सोऽय मेकस्तृचो बृहत्सामसम्बन्धभूतो वैश्वदेवशस्त्रस्य प्रतिपद्भवति। "आ विश्वदेवम्"-इत्येष तृचः ( सं० ५.८२.७-९.) तस्यानुचरः। अत उभयोर्बृहत्सामसम्बन्धः ॥

सूक्तान्तरे लिङ्गं दर्शयति—"उदु ष्य देवः सविता हिरण्ययेति सावित्र मूर्द्धवद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति। अस्मिन् तृचात्मके सावित्रसूक्ते ( सं० ६. ७१. ) अर्द्धवाचिन उच्छब्दस्य श्रवणात् ऊर्द्ध्वलिङ्ग मस्ति ॥

सूक्तान्तरे लिङ्गं दर्शयति—"ते हि द्यावापृथिवी विश्वशम्भुवेति द्यावापृथिवीयं; सुजन्मनी धिषणे अन्तरीयत इत्यन्तर्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"–इति। अस्मिन् द्यावापृथिवीये सूक्ते ( सं० १. १६०. ) "सुजन्मनी"--इत्येषः प्रथमाया ऋचस्तृतीयः पादः। तत्रान्तःपदस्य श्रूयमाणत्वात् अन्तर्वल्लिङ्गम् ॥

सूक्तान्तरे लिङ्गं दर्शयति— "तक्षन्रथं सुवृतं विद्मनापस इत्यार्भवं; तक्षन् हरी इन्द्रवाहा वृषण्वसू इति वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"–इति। "तक्षन्रथम्"--इति सूक्तमृभुदेवताकम् ( सं० १. १११. ); प्रथमाया ऋचस्तृतीयपादे "तक्षन् पितृभ्या मृभवः"–इतिश्रवणात्। तत्रैव "तक्षन्हरी"--इत्यादिकस्तृतीयः पादः; तस्मिन्वृषण्वसू इति वृषण्वल्लिङ्गं दृश्यते॥

सूक्तान्तरे लिङ्गं दर्शयति— "यज्ञस्य वो रथ्यं विश्पतिं विशामिति वैश्वदेवं; वृषा केतुर्यजतो द्यामशायतेति वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"–इति। "यज्ञस्य"--इत्यादिसूक्ते ( सं० १०. ९२. ) "इन्द्रो मित्रो वरुणः"--इत्येवं बहुदेवताश्रवणात् इदं वैश्वदेवम्। "वृषा केतुः"--इति एषः प्रथमायाश्चतुर्थः पादः। तत्र वृषण्वल्लिङ्ग मस्ति ॥

तदेतत् सूक्तं प्रशंसति— "तदु शार्यात मङ्गिरसो वै स्वर्गाय लोकाय सत्र मासत; ते ह स्म द्वितीयं द्वितीय मेवाहरागत्य मुह्यन्ति; तान्वा एतच्छार्यातो मानवो द्वितीयेऽहनि सूक्त मशंसयत्; ततो वै ते प्र यज्ञ मजानन् प्र स्वर्गं लोकं; तद्यदेतत्सूक्तं द्वितीयेऽहनि शंसति, यज्ञस्य प्रज्ञात्यै, स्वर्गस्य लोकस्यानुख्यात्यै" –इति। "यज्ञस्य वो रथ्यम्"--इत्यादिकं सूक्तं ( सं० १०. ९२. ) 'शार्यातम्' शार्य्यातस्य कस्यचिन्महर्षेः सम्बन्धादित्यवगन्तव्यम्।

कथं सम्बन्धम् ? इति, तदुच्यते—पुरा कदाचिदङ्गिरसो महर्षयः स्वर्गार्थं सत्र मनुष्ठातु मुद्युक्ताः ; तदा ते महर्षयो यस्मिन् यस्मिन् सत्रे पृष्ठ्यषडहस्य द्वितीय महरनुतिष्ठन्ति, तत्र सर्वत्र द्वितीये द्वितीयेऽहनि मन्त्रबाहुल्यात् कुत्र किं मन्त्रं पठितव्य मिति मज्ञात्वा मुह्यन्ति । तदानीं शार्य्यातनामकः कश्चिन्मानवः ऋत्विग्भूत्वा 'तान्' अङ्गिरसो महर्षीन् "यज्ञस्य वः"-इत्यादिकं सूक्तं द्वितीयेऽहन्यशंसयत् । 'ततः' सूक्तप्रभावादेव 'ते' महर्षयो 'यज्ञं प्रजानन्' यज्ञं प्रकर्षेण ज्ञातवन्तः । तद्यज्ञसाध्यं स्वर्गलोकं च प्रजानन् । तस्माद् द्वितीयेऽहन्येतस्य सूक्तस्य शंसनेन व्यामोह मन्तरेण यज्ञः प्रज्ञातो भवति, स्वर्गश्चावगम्यते ॥

मन्त्रान्तरस्य प्रतिपदि लिङ्गं दर्शयति—"पृक्षस्य वृष्णो अरुषस्य नू सह इत्याग्निमारुतस्य प्रतिपद् ; वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति । तत्र (सं०६.८.१-३.) "वृष्णः"-इतिश्रवणाद् वृषण्वल्लिङ्गम् ॥

मारुतसूक्ते लिङ्गं दर्शयति—"वृष्णे शर्धाय सुमखाय वेधस इति मारुतं; वृषण्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति । अत्र प्रथमाया ऋचो द्वितीयपादे "प्रभरा मरुद्भ्यः"-इतिश्रवणादिदं सूक्तं ( सं० १. ६४. ) मारुतम् । वृषण्वल्लिङ्गं स्पष्टम् ॥

जातवेदस्याया मच्युतत्वं लिङ्गं दर्शयति—"जातवेदसे सुनवाम सोम मिति ( सं० १. ९९. १. ) जातवेदस्याच्युता"-इति । प्रथमेऽहन्यस्या ऋचो विहितत्वादच्युतत्वम् ॥

सूक्तान्तरे लिङ्गं दर्शयति— "यज्ञेन वर्धत जातवेदस मिति जातवेदस्यं ; वृधन्वद्, द्वितीयेऽहनि द्वितीयस्याह्नो रूपम्"-इति । जातवेदोदेवताकत्वं वृधन्वल्लिङ्गं चात्र ( सं० २. २. ) विस्पष्टम् ॥

पञ्चमोऽध्यायपरिसमाप्त्यर्थः ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां पञ्चमाध्याये
(विंशाध्याये) चतुर्थः खण्डः ॥ ४ (१२) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायाः पञ्चमोऽध्यायः ॥

देवा वै षट्[१]। प्रजापतिर्वै सोमाय राज्ञे
ऽष्टौ[२]। ज्योतिर्गौरायुरष्टौ[३]। प्रजापतिः षट्[४]।
अग्निर्वै चत्वारि[५] ॥ ४ * ॥
देवा वै, ब्रह्मणस्पत्यया, ऽऽहूय दूरोहणं द्वादश ॥ ४ †॥

॥ इति चतुर्थपञ्चिका समाप्ता ॥

---

* २४५, २७८, ३२१, ३३६, ४०० पृ० (६-८-८-६-४= ३२ ख०)।
† २४५, २९९, ३९६ पृ० (१०-१०-१२=३२ ख०)। १आ० २२२पृ० † द्रष्टव्यम्।